स्पर्शनादेव ताक्ष्यात्मा हस्तो हन्याद्विषद्वयम् ।
एवं ताक्ष्यकरं ध्यायेदात्मानं गरुडात्मकम् ।। ७७

तथैव पादहस्तानां भेदबुद्धिं न चिन्तयेत् ।
एवं विधं समालोक्य नागा नश्यन्ति धारकम् ।। ७८

रसगन्धागरुनेपालनाभिहिङ्कुलटङ्कणम् ।
पापापद्द्वयसंयुक्तं विश्वसारेण पेषितम् ।। ७९

अञ्जनं चैव नश्यं(स्यं)च वृ(मृ)तसंजीवनं परम् ।
तिलप्रमाणं नेत्रेस्यादञ्जनं गरुडाञ्जनम् ।। ८०

अष्टादशविषं हन्ति भूतवेतालराक्षसान् ।
श्यामोरङ्गमहीनागं बीजमङ्कोलसंभवम् ।। ८१

मरी(रि)चं च समं भागं टङ्कणं हिङ्गुमेव च ।
सैन्धवं माक्षिकं चैव नरतोयेन पेषयेत् ।। ८२

अञ्जनं चैव न श्यं(स्यं) च मृतसञ्जीवनं परम् ।
तिलप्रमाणमित्यादि पूर्ववत्परिकीर्तितम् ।। ८३

अञ्जनं सैन्धवं तुत्थं टङ्कणं व्योष पारतं(दम्)।
ताम्रनीलवरी(टी)शङ्खं प्रत्येकं सार्धनिष्ककम् ।। ८४

दंतिबीजानि निष्कं स्यात् चित्रबीजार्थ संयुतम् ।
जंबीरफलसारेण दशवारं च पेषयेत् ।। ८५

अञ्जनं चेत्यादि देवि पूर्ववत्परिकीर्त्य(र्ति)तम् ।
श्वेतार्कलाङ्गलीकन्दं बिल्वमूलीपुनर्नवम् ।। ८६

पातालं मूलिकापत्रं चित्रमूलेन संयुतम् ।
शिग्रुपत्ररसेनैव दशवारं च पेषयेत् ।। ८७

पश्चात्पारदसंयुक्तं गुलिका निम्बमात्रकम् ।
अञ्जनं चेत्यादि देवि पूर्ववत्परिकीर्तितम् ।। ८८

श्वेतार्कमूलं गिरिकर्णिका च
हिङ्गुप्रवालं लशुनादिकोष्टम् ।
उत्तिष्ठते वासुकिना च दष्टा(ष्टो)
नस्याञ्जने प्राणवियोगकाले ।। ८९

अङ्कोलमूलं सममश्वगन्धा
नीलीकपालीश्वरबीजयुक्तम् ।
अजस्य सू(मू)त्रेण सु(स)मं तु पेषणात्
न श्यं(स्यं) विषं हन्ति च कालकूटम् ।। ९०

कारवल्याश्च बीजानि सर्पवक्त्रे प्रतिष्ठितम् ।
भूमौ क्षिप्य जलं स्थि(सि) क्त्वा पश्चाच्छाखोपशोभितम् ।।

तस्य पत्रफलं गृह्य वचालशुनसंयुतम् ।
नृजलेनास्य(नृजलेनस्य)मात्रेण सर्वसर्पान् विनाशयेत् ।।९२

ताम्बूलपत्रमरिचं वचालशुनसंयुतम् ।
नृजले नस्यमात्रेण कालकूलविषापहम् ।। ९३

व्योषं सैन्धवपारत(द)संयुतं
रामठ टंकण दन्तिजबीजम् ।
गन्धमनः शिलातल संयुतं
सर्पविषं नर दृष्टिमात्रे हन्ति(?)९४

शयंमितिमिरं पटलं मूषक सर्प भयम् ।। (?)

त्रीणि कटूनि करञ्जफलानि
द्बैरनैः सह सैन्धवयुक्तम् ।(?)

वारितरङ्ग तरुणोरुप बीजं
बिल्व च जम्बीर रसेन च पिष्टम् ।। (?) ९५

हन्ति शयि तिमिरं पटलं
मूषिकवृश्चिकसर्पभयं च ।। (?)
हरितालगन्धमनः शिला रसान्
सविधोन्(?) विलोग्य(डय)धनदाक्षितैलके ।। ९६

नयनाञ्जनेन विधिना तु जिहामपि(?)
दृष्ट मष्टफणिभिः विचेष्टितम् (?) ९७

टंकणं सैन्धवं हिङ्गु हरितालं कटुत्रयम् ।
रसयुक्तं च पैशाच भीकसारेण पेषितम् ।। ९८

अ(अं)जयेदर्कदुग्धेन कालदष्टोऽपि जीवति ।। ९९

इन्दुखण्डफल रोचम(न)तालि(ली)
पत्रभस्म च ससैन्धव धूमम् ।
व्योषयुक्तमथ जंभलसारैः
पेषितं च तदुत्तममेतत् ।। १००

अञ्जनेन विष नाशनं .......
शत्रुभूत नयनोक्तटोद्वणम् (नोत्कटं व्रणम्) ।
उग्रवेगमिदमभ्रमतं जनं (मप्यनञ्जनं)
शिग्रुपुष्पमु(सु)रसै र्विमोचनम् ।। १०१

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये चतुःपञ्चाशोऽध्यायः ।।



## ।। पञ्चपञ्चाशोऽध्यायः ।।

ऋषिः समृद्धिमन्त्रस्य भगवानमृतेश्वरः ।
गायत्रं छन्द इत्युक्तं समृद्धिर्देवता मता ।। १

सां बीजमाहुतिः शक्तिः योगः सर्वसमृद्धये ।
सां स्वां(सी)मादिकरन्यासं षडङ्गं चार्णषट्कतः ।। २

ध्यायेत्काञ्चनसन्निभां त्रिणयनां दिव्याम्बरालङ्कृतां
संफुल्लारुण पद्मकोमलयुगश्रीमत्कराम्भोरुहाम् ।
नानारत्नविचित्रितां च सुमहालङ्कार वेषोज्वलां
देवीं सर्ववरप्रदाननिरतां वृद्धिं समृद्धिं पराम् ।। ३

सामों नमो भगवति समृद्धे तदनन्तरम् ।
समृद्धिकरे तत्पश्चात् समृद्धिक(फ)लदे व(त)तः ।। ४

समृद्धिं च (कुरु)द्वन्द्वं स्वाहान्तं मन्त्रमुच्यते ।
एकत्रिंशल्लिपिमयं लघुसिद्धिप्रदायकम् ।। ५

पुरश्चर्यार्णसाहस्रं त्रिसहस्रं क्रियादिषु ।
अयुतं स्यान्महाकार्ये साध्यं(ऽसाध्ये)द्वादशतः परम् ।। ६

भूद्वन्द्वे नागपत्रे मुनिदलविवरे कोणषट्के च बिन्दौ
बाह्ये मन्त्रं क्रमेण विल(णानिल)सखवनिनां मध्य बिन्दौ
लिखित्वा ।
बाह्ये साध्यं समार्णं प्रणवलिपिवृतं यन्त्रमेतद्रहस्यं
सर्वार्थैकाभिवृद्धिप्रदमरफलदं विश्वरूपाभिधानम् ।। ७

चराचरात्मके धातुमूला निलात्मके (?)
यन्त्रेऽस्मिन्(यत्रास्ति)न्यूनता तस्मिन् कल्पयेद्यन्त्रमुत्तमम् ।।८

ऋद्धिमभ्येति तद्वस्तु षण्मासान्नात्रसंशयः ।
आत्मज्ञानमनोबुद्धिसत्व राशि(?)न्द्रियाणि च ।। ९

विषयाणीन्द्रियाणां च भूतान्यन्यानि तानि(यानि) च ।
समृद्धिं सहसा यान्ति वृद्धि(वार्धि)श्चन्द्रोदिवा (चन्दोयादिव) ।।

किमत्र बहुनोक्तेन साध्य (समृद्धि) यन्त्रस्य धारणम् ।
चतुर्वर्गार्थसंसिद्धिर्भवेन्नैवात्र संशयः ।। ११

सूत्रादिकाद्यथा दीपस्तैलस्त्वति षयाशयात्[1] ।
जपाधि(दिका)त्तथा मन्त्रं प्रभावाद्वीर्यवद्भवेत् ।। १२

ऋषिः पुरन्दरःपञ्चमुख्य(ख)स्य स्वनवत्ततः(च हनूमतः) ।
मारुतात्मजबीजं स्यादञ्जनासूनमि(सूनुरि)त्यपि ।। १३

शक्तिर्योगः शत्रुनाशे रा(ज)वश्ये विशेषतः ।
हनुमंतात(हनुमतेऽथ)हृन्मन्त्रं वज्रेदेहाय मूर्धिनि च ।। १४

वायुपुत्राय संप्रोक्त्वा शिखायां विन्यसेद्बुधः ।
कवचं विन्यसेद्धीमान् नमोऽन्तं ब्रह्मचारिणे ।। १५

अग्निगर्भाय नेत्रे स्यादस्त्रं पञ्चमुखाय च ।
ब्रह्मास्त्रनिवारणाय प्रोच्चरेन्मन्त्रवित्तमः ।। १६

---

1. सूत्रादिकाद्यथा तैलदीपस्त्विडतिशयाशयः ।

पञ्चास्यमच्युतमनेकविचित्रवन्तं
[1]चक्रं सुशंखविविधं कपिराजवर्यम्।
पीताम्बरादिमुकुटैरुपशोभिताङ्गं
पिङ्गाक्षमाद्यमनिशं मनसा स्मरामि ।। १७

[2]पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम् ।
सूर्यकोटिप्रतीकाशं कपिवक्त्रं सुतेजसम् ।। १८

दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ।
आस्येकं(अस्यैकं)दक्षिणं वक्त्रं नारसिह्मं म(हा)द्भुतम्।।१९

---

1. अनेकविचित्रवर्णवक्त्रं शशाङ्कशिखरं कपिराजवर्यमित्येव समीचीनः पाठः।

2. पञ्चमुखहनुमतः ध्यानमन्यत्रैवम्-पञ्चवक्त्रं महाभीजं त्रिपञ्च-नयनैर्युतम्। बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम् । पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम् । दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् । अस्य वै दक्षिणं वक्त्रं नारसिह्मं महाद्भुतम् । अत्युग्रतेजोवपुषं भीषणं भयनाशनम् । पश्चिमं गारुडं वक्त्रं वक्रतुण्डं महाबलम् । सर्व-नागप्रशमनं विषभूतादिकृन्तनम् । उत्तरं सौकरं कृष्णं उग्रदीप्तानलोपमम् । पातालसिह्मवेतालज्वररोगादिकृन्तनम् । ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम् । ध्यायेत्पञ्चमुखं रुद्रं हनुमन्तं दयानिधिम् । खड्गं त्रिशूलं खट्वाङ्गं पाशमंकुशपर्वतम् । मुष्टिं कौमोदकीं वृक्षं धारयन्तं कमण्डलुम् । भिन्दिपालं ज्ञानमुद्रां दशभिर्मुनिपुङ्गव । एतान्यायुधजालानि धारयन्तं भजाम्यहम् । प्रेतासनोपविष्टं तं सर्वाभरणभूषितम् । दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम्। सर्वाश्चर्यमयं देवं हनुमद्विश्वतोमुखम् । अत्र ध्याने द्वादशायुधानि दशभिर्भुजैः धारयन्तं हनुमन्तं भजामि इति निर्दिष्टम् । भगवताहनुमता हस्तद्वयेनायुधचतुष्टयं धृतं भवेदिति कल्प्यम् ।

अत्युग्रतेजोवपुषं भीषणं भयनाशनम् ।
पश्चिमं गारुडं वक्त्रं वक्रतुण्डं महाद्युतिम् ।। २०

पातालसिद्धिदं घोरं विषभूतादिकृन्तनम् ।
उत्तरं सूकरं वक्त्रं कृष्णं दीपशिखोज्ज्वलम् ।। २१

सर्वभूतप्रशमनं तापज्वरनिवारणम् ।
ऊर्ध्वं हवायाम(हयाननं)घोरं दानवान्तकरं परम् ।। २२

खड्गत्रिशूलखट्वाङ्गं पाशमङ्कुशपर्वतौ ।
द्रुमगोमुद्रिकातुण्डं दशमं सुरवन्दिते ।। २३

एतान्यायुधजालानि धारयन्तं निरन्तरम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपितम् ।। २४

एतद्ध्यानं परं गुह्यं सर्वपापप्रणाशनम् ।
तारं हरिपदं चैव मर्कटीमर्कटाय च ।। २५

स्वाहान्तको मानुरयं द्वादशार्णोऽर्थसिद्धिदः ।
मर्कटेश महोत्साह सर्वशत्रुविनाशन ।। २६

शत्रून् संहर मां रक्ष प्रियं दापय देहि मे ।
आनुष्टुभं हरेर्देवि सर्वशत्रुविनाशनम् ।। २७

वर्णस्य दशसाहस्त्रं जपेन्मन्त्री यथाक्रमम् ।
अथ यन्त्रं प्रवक्ष्यमामि सर्वकामार्थसिद्धये ।। २८

आदौ चन्द्रं समालिख्य त्रिकोणं वर्तुलं भवेत् (लिखेत्)।
बहिरष्टदलं पद्मं तद्बाह्ये द्वादशाक्षरम्(द्वादशारकम्)।।

षोडशारं ततः पश्चात् द्वात्रिंशद्दलसंयुतम् ।
चतुःषष्टिदलं पश्चात् तद्बहिर्भूपुरद्वयम् ।। ३०

मायाबीजं साध्ययुतं वर्तुले मूलमन्त्रकम् ।
त्रिकोणेषु महेशानि आंह्रीं क्रोमिति संलिखेत् ।। ३१

बहिरष्टदले वायुपुत्रस्याष्टाक्षरं लिखेत् ।
ओं रामदूताय स्वाहा इत्यष्टार्णो महेश्वरि ।। ३२

द्वादशरे लिखेन्मन्त्री हं हनूमत इत्यपि ।
नमः पञ्चमुखायेति लिखित्वा षोडशारके ।। ३३

नमश्च पुरतः सीता पतये पदमुद्धरेत् ।
रामायेति पदं पश्चात् धनश(सं)वृद्धिरुच्यते ।। ३४

हुं फडन्तं मनुश्रेष्ठं षोडशारे लिखेद्बुधः ।
तद्बहिर्मातृकां लिख्य प्रादक्षिण्यक्रमेण वै ।। ३५

द्वात्रिंशद्दलकेष्वेषु नृसिंह्मानुष्टुभं लिखेत् ।
उग्रंवीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।। ३६

नृसिंह्मं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ।
अन्तराले लिखेत्पञ्चवक्त्रस्यानुष्टुभं प्रिये ।। ३७

चतुःषष्टिदलान्तेषु मालामन्त्रं लिखेत्क्रमात् ।
परितः शेषवर्णान्वै भूपुरेषु समालिखेत् ।। ३८

ओं ह्रीं वं खें च खे तारं नमो भगवतेति च ।
वीरप्रचण्ड प्रप्रोक्त्वा तापायेति हनूमते ।। ३९

हुं खे प्रोक्त्वा गतिं बन्ध मतिवाङ्मार्ग बंध च ।
चोरवृश्चिकव्याघ्रेति गज बन्ध ततः परम् ।। ४०

शरभेति च शार्दूल बंध सर्वत्र वर्जयेत् (द्विर्वदेत् )।
दुष्टनानाविधमृग भेरुंडेति च भूत च ।। ४१

प्रेतबन्ध पिशांचेति शाकिनीडाकिनी ततः ।
राक्षसेति च वेतालरोगबंध ज्वरेति च ।। ४२

शूल सर्वं वेदिता च राजराजसभा ततः (?) ।
प्रति वा गी(दि)परमन्त्रपर तं (यं)त्र ततः परम् ।। ४३

परतंत्रं शत्रुबंध सर्वदेव परं(दं)ततः ।
ता न (ना) वेशययुग्मं च भो वीरेति पदं ततः । ४४

प्रतापरुद्र संप्रोक्त्वा भीषणेति पदं ततः ।
साकिनीश्चैव वेतालान् ब्रह्मराक्षससं(ज्ञि)ज्ञकान् ।। ४५

उच्चाटय ज्वरसमूहान् हर राज तथा पुनः ।
चोरशत्रु समूहांश्च अण्डजानपि तत्परम् ।। ४६

उच्चाटयेति सर्वत्र योजनीयं महेश्वरि ।
मां रक्षयुगमुच्चार्य ओं यं तारं नमो पदम् ।। ४७

भगवतेति पदं प्रोक्त्वा हनुमते पदं वदेत् ।
हुंफट् स्वाह(हा)नु मां रक्षयुगं बुद्बुदशब्दकम् (?) ।। ४८

सत्तमात्वेदजः(?) प्रोक्त्वा उच्चाटय युगं वदेत् ।
हिंसकादि सर्वजन्तूनुच्चाटय युगं पुनः ।। ४९

तारं नमो भगवते वीरशब्दं समुद्धरेत् ।
हनुमतेति संप्रोक्त्वा पीताम्बरधराय च ।। ५०

कर्णकुण्डलसंप्रोक्त्वालङ्कृताय पदं वदेत् ।
कौपीनकटिसूत्रेति राजिताय विपूर्वकम् ।। ५१

श्रीरामचन्द्रसंप्रोक्त्वा मनोऽभिलषिताय च ।
लङ्कापुरीदह प्रोक्त्वानकारणाय संवदेत् ।। ५२

दानवेति कुलगिरिवज्रदण्डाय तत्परम् ।
अक्षेति पदमुद्धृत्य कुमारपदमुद्धरेत् ।। ५३

संहारकारणायेति ओं यं रं ध्रौं तारकम् ।
नमो भगवते श्रीरामदूत(ाय) पदं वदेत् ।। ५४

हनुमते हुं फडिति स्वाहामालामनुः स्मृतः ।
दशदिग्बन्धसहितो राक्षसेन(रक्षणाय)महामनुः ।। ५५

सकृदुच्चारणादस्य सर्वग्रहविमोक्षणम् ।
एतद्यन्त्रं समालिख्य गुलिकीकृत्य धारयेत् ।। ५६

सर्वशत्रुक्षयकरं सदाविजयवर्धनम् ।
आयुरारोग्यमैश्वर्यं लभते नात्रसंशयः ।। ५७

एतत्प्रपूजितं रात्रौ यन्त्रं सिन्दूररञ्जितम् ।
करोति महदाकर्षं सुदूरमपि योषितम् ।। ५८

राजानं नगरं ग्रामं स्त्रियं वा वरवर्णिनीम् ।
अष्टोत्तरसहस्रेण वशयेन्नात्रसंशयः ।। ५९

अथवा राज्यते (जपते)विद्वान्नद्यां वा सिन्धुसंगममे ।
अवक्रस्य(तटाकस्थ)जलस्याभिमुखेनाष्टसहस्रकम् ।। ६०

आकर्षयेन्नसन्देहो योजनानां शतैरपि ।
सोमग्रहणवेलायां प्राणस्थापनसंयुतम् ।। ६१

शिखा ये(यां)धारयेन्मर्त्यः सर्वत्र विजयी भवेत् ।
राजद्वारे तथा युद्धे सभायां व्यवहारके ।। ६२

द्यूते दस्युभये चैव व्याघ्रसिंहभयेषु च ।
समस्तकार्योद्योगेषु युद्धोद्योगे विशेषतः ।। ६३

गजाश्वरोहयोश्चैव वाणिज्य(ज्यो)द्रव्यसङ्ग्रहे ।
नदीसमुद्रतरणे संप्राप्ते प्राणसङ्कटे ।। ६४

शत्रूणां च समूहेषु दुर्गमे नृपसन्निधौ ।
अमोघविद्या(द्यो) भवति लब्धकार्यो विशेषतः ।। ६५

युवतीनां समूहेषु कन्दर्पसदृशो भवेत् ।
ताम्बूले विलेखेद्यन्त्रं निशासारेण बुद्धिमान् ।। ६६

भक्षयित्वा सदा नारी नरो वा वश्यमाप्नुयात् ।
स्त्रीणां मैथुनमागत्य य इदं स्मरते सदा ।। ६७

न गच्छेदन्यपुरुषं स्वयंग्राहं करोति च ।
न निद्रां लभते मूर्छां गच्छति तदनुग्रहं(हात्) ।। ६८

विरहे मरणं याति क्षणादपि न संशयः ।
पीतद्रवेण संलिख्य धारयेत्सततं नरः ।। ६९

नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणम् ।
महानीलीरसेनापि नाम संयोज्य पूर्ववत् ।। ७०

दक्षिणाभिमुखो वह्नौ दग्ध्वा मारयते क्षणात् ।
विषचित्रिकयालिख्य नीलीने(नीलिन्या)द्वेषमन्दिरे ।। ७१

उच्चाटनं भवेत्तस्य स यति यमसादनम् ।
पापशुद्धिमथो वक्ष्ये पूजाहोमविधानतः ।। ७२

स्मरणादेवमन्त्रस्य पापसंहारपञ्जरम् ।
सन्यासी च तपस्वी च गुरोराज्ञावलम्बकः ।। ७३

मन्त्रहीन(:)समाम(सपापश्चसुरापी स्वर्णवञ्चकः ।
एतांश्चैव महापापान् बुद्धिपूर्वकृतानपि ।। ७४

शतकृत्वो जपेन्मन्त्रं पापराशिकुलं दहेत् ।
त्रिवारं जपमात्रेण भ्रूणहत्या विनाशनम् ।। ७५

त्रिवारं जपमात्रेण चण्डाली स्पर्शनादिकम् ।
पापं विनाशयेद्देवि सत्यं सत्यं वदाम्यहम् ।। ७६

वेश्यासंगतिजं पापं पञ्चकृत्वो विनाशयेत् ।
क्षेत्रदारगृह स्वर्णमुक्ताभरणहारकः ।। ७७

अपात्रदानस्वीकारी रजस्त्रीगमनंस्तथा ।
(अपात्रदानस्वीकारात् रजःस्त्रीगमनात्तथा।)
तत्पापं विलयं याति अष्टोत्तरशतेन च ।। ७८

अथवास्य विधिं वक्ष्ये पञ्चवक्त्रहनूमतः ।
मधुयुक्तैः पाटलीभिः(?) होमाद्राजा वशी भवेत् ।। ७९

वकुलैरिक्षुदण्डैश्च होमाद्वैश्यं वशं नयेत् ।
शतपुष्पैर्मल्लिकाभिः नित्यहोमाच्छतं शतम् ।। ८०

राजपुत्रश्च पौत्रश्च सप्ताहात्तु वशीभवेत् ।
कल्हारपुष्पहोमैश्च अमर्त्यो वशगो भवेत् ।। ८१

राजपुत्रान् जातिपुष्पैर्नन्द्यावर्तैस्तथैव च ।
पुन्नागकुसुमैर्होमात् राजा भवति दासवत् ।। ८२

वकुलैश्चम्पकैर्होमात् सप्ताहाद्वशगो भवेत् ।
कौसुम्भसमिदाज्याप्तं (क्तं)त्रिदिनं जुहुयाच्छतम् ।। ८३

राज पुत्रसपौत्रश्च(राजा समुत्रपौत्रश्च)
प्राणान्तं वशगो भवेत् ।
सितकेतकपुष्पैश्च राजपत्नी व शा(शे) भवेत् ।। ८९

कदम्बकुसुमैर्होमाद्दासवद्वशगो(गा) भवेत् ।
वश्येऽवश्यार्तिभूर्नित्यं मधुयुक्तैश्च पुष्पकैः ।। ९०

त्रिदिनं च शतं हुत्वा यावज्जीवति दासवत् ।
त्रिमधु पञ्चरात्रं वा नित्यं चैव शतं शतम् ।। ९१

त्रिरात्रं वापि जुहुयान्मन्त्री सम्यक्समाहितः ।
पितृमातृभ्रातृपुत्रान् त्यक्त्वा दासी भवेद्ध्रुवम् ।। ९२

मधुयुक्तहरिद्राभिरष्टोत्तरशतं हुनेत् ।
स्त्रीजातीनां समस्तानां दर्शनादेव मोहनम् ।। ९३

लक्ष्मीपत्रशतैर्होमात् क्षत्रकन्या वशा(शे)भवेत् ।
केतकीरम्यकुसुमैः सर्वकन्या वशे भवेत् ।। ९४

कुङ्कुमागरुकर्पूरचन्दनोशि(शी)रसारकैः ।
एतैः सुमिश्रितैर्बह्वी(र्बाह्लीं[1]) पेषयेन्नववारिणा ।। ९५

त्रिवारमङ्गलेपेन पुमांसो दास्यमाप्नुयुः ।
विष्णुक्रान्त्या महानीली श्वेता(श्वेता) च गिरिकर्णिका ।। ९६

एषां मूलंसमुद्धृत्य गोरोचनसमन्वितम् ।
कन्याहस्तेन निष्पिष्य तिलकं तेन कारयेत् ।। ९७

त्रैलोक्यमोहनं त्वेतत् किमु लोकजनस्य वै ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
पञ्चपञ्चाशोऽध्यायः ।।



---

1. सूबाह्लीक इत्यर्थे बाह्ली शब्दः प्रयुक्तो भवेत् । बाह्लीक- Saffron.

## ।। षट्पञ्चाशोऽध्यायः ।।

श्रीकान्तिविद्यामन्त्रस्य ऋषिः शोभ(भा)करः स्मृतः ।
गायत्रं छन्द इत्युक्तं कान्तिविद्या च देवता ।। १

कां बीजमाहुतिः शक्तिः क्रोंकारं कीलकं तथा ।
श्रीनानाकान्तिसिद्ध्यर्थे विनियोगो वरानने ।। २

ध्यायेच्चामीकराभां शशि(श)धर विलसद्बर्बरस्निग्धकेशाम्
संफुल्लाम्भोरुहस्थामखिलमणिगणोल्लासिभूषाभिरामाम् ।
देवीं दिव्यामृतार्द्रां वरदल(र)विलसत्स्मेरवक्त्रामुदारां
[1]चन्द्रेणाग्नित्रिकोणां नतजनवरदां सर्वविज्ञान सिध्यै ।। ३

कां क्रों नमो भगवति कान्ति विद्ये महाप्रकाशिनि
विश्वरूपिणि इष्टकान्तिं देहि मे स्वाहा ।
कां क्रों नमो भगवति कान्तिविद्ये ततः परम्
महाप्रकाशिनी तस्तत् (तितितस्)तत्पश्चाद्विश्वरूपिणि ।। ४

इष्टकान्तिं देहि मे च स्वाहान्तं मन्त्रमुत्तमम् ।
द्वात्रिंशच्च वरार्णोऽयं पुरश्चर्या यथा पुरा ।। ५

द्वात्रिंशत्कोष्ठयन्त्रे त्रिशिखपरिवृते मन्त्रराजं च गर्भे
सन्धौ सन्धौ च मायां त्रिशिखगृहयुगेष्वालिखेद्रत्नवर्णम् ।

बाह्ये तारं च लक्ष्मीमभि च(?)परिवृतं पूर्णवर्णाभिवीतं
नानादीप्तिप्रदं तन्निमिषफलकरं कान्तिविद्याख्ययन्त्रम् ।।६

---

1. चन्द्रार्काग्नित्रिणेत्रामिति पाठः समञ्जसः स्यादिति भाति ।

चराचरेषु चैकस्मिन् मूर्ध्नि यन्त्रं चिरं स्मरन् ।
कान्तिविद्यां च तन्मध्ये ध्यायन् सोऽहमिति स्मरन् ।। ७

त्रिसहस्रं जपेन्मन्त्री मन्त्रं सन्तुष्टमानसः ।
तत्तत्कान्तिमवाप्नोति कान्तिविद्याप्रसादतः ।। ८

सूर्यो सौरीं विधौ चान्द्रीं तथा सर्वेषु सर्वतः ।
यत्र यत्र स्मरन् कान्तिं तत्तद्भाति स मन्त्रवित् ।। ९

जपन् तदात्म(तादाम्य) भावेन कान्तिविद्यां हृदि स्मरन् ।
प्रदद्यादाज्यसंयुक्तं कान्तिर्नैवात्र संशयः ।। १०

तस्मत्कान्तिमनुं मन्त्री भक्त्या परमया जपेत् ।
स एव सर्वलोकानां कान्तिदेवी भवेच्छिवे ।। ११

कां क्लीं नमो भगवति कान्तिदेवि ततः परम् ।
प्रों श्रीं क्लीं ब्रूं आं ह्रीं क्रों श्रीं हुं फट् सुदर्शय(न)
सहस्रार हुं फट् -
काम रूपिणि तत्पश्चात् आगच्छेति स्व(द्व)यंततः ।। १२

स्वेष्टकान्तिं प्रयच्छ(छे)ति स्वाहान्तं मन्त्रमुच्यते ।
द्वात्रिंशदक्षरं मन्त्रं सर्वाघौघविनाशनम् ।। १३

दुर्निवार्यामयहरं दुःखध्वान्तैकभास्करम् ।
यथापुराखिलं कृत्यं वश्यं श्रीकान्तिवर्धनम् ।। १४

श्रीवृत्तं भानुपत्रं दशदलविवरं षड्गृहं वह्निकोणं
श्रीविन्दुंमूलमन्त्रंत्वभितपरिवृतं तारमायाभिवीतम् ।
आवाह्याराध्य मन्त्री विधिवदभिमृशन्साधयेत्स्वेष्टकार्यं
श्रीसिध्यैकान्तिसिध्यैजगदखिलमतःपापरोगोपशान्त्यै ।। १५

श्रीसुदर्शनमन्त्रस्य हवि(अहि) र्बुध्न्यऋषिः स्मृतः ।
छन्दो गायत्रमाक्यातं देवता श्री सुदर्शनः ।। १६

क्लीं बीजं हुं ततः शक्तिः फट्कीलकमितीरितम् ।
प्लों(फ्रों)घ्रीं क्लीं हृदि विन्यस्य ब्लूं आं ह्रीं शिरसिन्यसेत्।।

क्रों ह्रीं(श्रीं)हुं तु शिखायां च फट्सुदर्शन वर्म च ।
हुं फडन्तं सहस्त्रारमस्त्रमन्त्रमितीरितम् ।। १८

तथाङ्गन्यासमेवं स्याद् ध्यानं वच्मि श्रृणु प्रिये ।
शंखं चक्रं सुचापं परशुमसिमिषुं शूलपाशाङ्कुशाग्नीन्
बिभ्रद्वज्रं च खेटं हलमुसलगदाकुन्तमत्युग्रदन्तम् ।
ज्वालाकेशं त्रिणेत्रं ज्वलदनलनिभं हारकेयूरभूषं
ध्यायेत् षट्कोण संस्थं सकलरिपुजनप्राणसंहारचक्रम् ।।

प्रों(फ्रों)श्रीं(घ्रीं)क्लीं ब्लूं तथोच्चार्य आं ह्रीं क्रोंश्रीमितीरयेत्।।

हुं फट् सुदर्श ये(ने)त्युक्त्वा सहस्त्रारपदं वदेत् ।
हुं फट् चंतो(फडन्तो) मनुर्देवि विंशत्यर्णोऽर्थ सिद्धिदः ।।

लक्षमात्रं पुरश्चर्यां चरित्वा साधयेत्क्रमात् ।
चोरमारीग्रहाणां च विशेषेण तु कृन्तनम् ।। २२

महावश्यकरं शीघ्रं राज्ञां चैवाभिवृद्धिदम् ।
जपतां सर्वपापघ्नं सर्वसौख्यकरं परम् ।। २३

षट्कोणं बिन्दुमध्यस्थं कोणे चक्रषडक्षरी ।
सुदर्शनेति संप्रोक्त्वा प्रों(फ्रों)घ्रीं लिख्यान्तरालके ।। २४

तद्बाह्येऽष्टदले पद्म शिष्टं बीजाष्टकं लिखेत् ।
केसरेषु स्वरान् लिख्य षोडशे कादिसान्तकम् ।। २५

चतुरस्त्रे हळक्षेति फट्लिखेन्मन्त्रतत्त्ववित् ।
एवं यन्त्रं समालिख्य प्राणान् संस्थाप्य मन्त्रवित् ।। २६

वन्ध्याङ्गना च पुत्राप्त्यै ग्रहाणां मोचनाय च ।
धनाप्त्यै रोगनाशाय चोरशान्त्यै विशेषतः ।। २७

वश्याय च हितावाप्त्यै वाक्सिध्यै चान्नसिद्धये ।
तद्यन्त्रधारकस्यात्र किं वा लोके न सिध्यति ।। २८

तद्यन्त्रस्थापनाद्राज्यं ग्रामं पुरमथापि वा ।
रक्षयेदहितार्थेभ्यो मन्त्री रोगविषादिभिः ।। २९

सर्वभूतहितार्थाय गदितं गिरिनन्दने ।
मोहयेत्स्तम्भयेन्मन्त्री मारयेच्चोच्चाटयेद्रिपून् ।। ३०

एतेन वशयेत्क्षिप्रं द्वेषयेच्च परस्परम् ।
आकर्षयेद्भ्रामयेच्च सर्वभूतज्वरादिकान् ।। ३१

तत्तद्बीजार्पणाद्देवि क्षिप्रं सिध्यति मन्त्रिणाम् ।
बहुनोक्तेन(किं देवि) मन्त्रोऽयमखिलार्थदः ।। ३२

सर्वार्थे फ्रों पुटं प्रोक्तं तद्वत् छ्रीं स्तम्भनाय च ।
क्लीं पुटं मोहनाय स्यात् ब्लूं पुटं भ्रमणे भवेत् ।। ३३

उच्चाटविषसंहारे चोराणां च विशेषतः ।
आकर्षे आं पुटं प्रोक्तं ह्रीं पुटं पापनाशने ।। ३४

वश्याय मोहनाय स्यादायुषे प्रजपेन्मनुम् ।
वाग्गतिस्तम्भनाय स्यात् क्रों पुटं सुरवन्दिते ।। ३५

कमलाबीजपुटितं यो जपेद्दशवर्णकम् ।
अब्(ज़प)मात्रेण देवेशि साक्षाद् वैश्रवणायते ।। ३६

वर्मास्त्रयोर्मध्यदेशे गतं चैव दशाक्षरम् ।
जपेदुन्मादनायशु स्तम्भनायचमोहने ।। ३७

रात्रौ मोहं(होमं)प्रकुर्वीत शत्रूणां नाशनाय वै ।
सितसर्षपमोहेन(होमेन)मारयेद्रिपुमात्मनः ।। ३८

कार्पासक(ल)शुनारिष्टैर्विषवृक्षदलैस्तथा ।
*कनकैर्मोहयेच्चोरान् तत्पत्रफलपुष्पकैः ।। ३९

तथैव वकुलैश्चोरान् मोहयेन्मादयेत्तथा ।
विभीतकैः खादिरोत्थैः चोरानुच्चटयेद्रिपून् ।। ४०

निबर्हि(निम्बैर्हि) द्वेषयेन्मन्त्री आकर्षे च मधुत्रयैः ।
नीलोत्पलदलैश्चापि वशयेत्तत्क्षणात्प्रिये ।। ४१

पद्मैः साज्यैः श्रियै होमैःस्यत्तथा यशसे पुमान् ।
तिलहोमेन पापानि व्यपोहयति गोघृतैः ।। ४२

तिलाः क्षीरं तथादूर्वा अपामार्गा महेश्वरि ।
होमो रोगविनाशाय ग्रहशान्तिर्विशेषतः ।। ४३

केवलेनैव पयसा हुनेद्गोकुलवृद्धये ।
भूतशान्तिगुग्गुलुभिः स्त्रीवश्याय प्रियङ्गुभिः ।। ४४

गोरोचनागोमयाभ्यां सेना संस्तम्भनं भवेत् ।
मोहनं देवशत्रूणां गोमूत्रेण विशेषतः ।। ४५

---

* कनक = पलाग

कार्पासगृहधूमादि पादपांसुनि मिश्रितैः ।
क्षीरवृक्षसमिद्भिश्च हुनेन्निशि निशातधीः ।। ४६

अङ्गहीना(य)चोराणां विद्वेष्ट्यै मारणाय च ।
लवणं सर्वचोराणां कुलनाशाय तद्भवेत् ।। ४७

रक्ताम्भोरुह होमेन राज्यश्रीर्वर्धते ध्रुवम् ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
षट्पञ्चाशोऽध्यायः ।।



## ।। सप्तपञ्चाशोऽध्यायः ।।

रहस्यं श्रृणु देवेशि वदामि मदनावतीम् ।
मन्त्रस्य मदनावत्या ऋषिः कामेश्वरःस्मृतः ।। १

बृहती खंजमि(छन्द इ)त्युक्तं देवता मदनावती ।
मं बीजमीं ततः शक्तिः लक्ष्मीः कीलकमुच्यते ।। २

त्रिभिर्दीर्घादिभिर्न्यासं मूलयुक्तं कराङ्गयोः ।
हेमाभां सितमालिकांशुकलसत्सर्वाङ्ग भूषोज्ज्वलां
सुस्मेरामरुणाधरां कुचभरद्वन्द्वानतां शोभनाम् ।। ३

अद्वैत प्रतिवादिनीं त्रिभुवस्वेष्टार्थसंबन्धिनीं
तां ध्यायेन्मदनावतीं नतजनाभीष्टप्रदाने रताम् ।
त्रिश्चोन्नमो भगवति मदनावति तत्परम् ।। ४

महामाये जगत्सर्वं क्षोभये(य)द्विस्ततोरसा(मा)म् ।
कृशानुवनितायुक्तं मन्त्रं द्वात्रिंशदक्षरम् ।। ५

यथापुरा पुरश्चर्या होमे दाडिमजं फलम् ।
प्रसादे क्षोभणे तत्तन्नामभावचतुष्टयम् ।। ६

तत्तारा(तत्तदा ?) राध्य वृक्षं वा खेचरं वाऽथ भूचरम् ।
पादपानां च पञ्चाङ्गं मृगाणां विशतोत्तमम् (?) ।। ७

पक्षां(क्षि)णामखिलं पक्षं नखचञ्चुविवर्जितम् ।
शिखरं बि(शिखिरवि) शशिगेहे मन्त्रमन्त्यार्णमध्यं
प्रतिग(द)ल(मथ)देशे रत्नबीजं स्वशक्तिम् ।। ८

बहिरथरिपुसाध्यं पूर्ण पञ्चाशदर्णं
सकलभुवनमोहक्षोभदं यन्त्रमेतत् ।
सुगन्धिवस्तुसाध्यं तु सावधानं सलक्षणम् ।। ९

यन्त्रमेतत्समालिख्य समाराध्य तु विंशकैः ।
चतुःसहस्रं प्रजपेत् स्पृष्ट्वा मन्त्री ततः परम् ।। १०

चतुः शतं साध्यपूर्वं मन्त्र्य तद्भस्म गोधिके (?) साधकः ।
क्षुभ्यत्यव्यजतिलकांतृ(क्षोभयेत्तिलकं कृत्वा)
जंगगं स्थावरं(जङ्गमस्थावरं)जगत् ।। ११

भूयो जपेत्तथामन्त्री ध्यात्वा वैरिदिगा नसः(सनः) ।
भक्ष्यन्ति(नश्यन्ति) तरसा सर्वे यदृच्छादुरितार्दिताः ।। १२

मा मीं नमो भगवति मदनावति तत्परम् ।
पिबहो(विश्व)मोहिनि तत्पश्चान्महाबलपराक्रमे ।। १३

ज्वल द्वि(:) प्रज्वल द्वि(द्विः) स्यादमीष्टं मर्दय द्वयम् ।
म्लीं स्वाहेति महामन्त्रं देवसंख्याक्षरं परम् ।। १४

पूर्ववत्कार्यजालानि प्रयोगश्च तथाविधः ।
सन्ध्याख्यं तिर्यगूर्ध्वं परिलिखितबहीरेख रेखाग्रशूल-
मूर्ध्वं तन्मन्त्रमर्णं स्मरदल मखिलं तारलक्ष्मीप्रपूर्णम् ।
हेमादौ लिख्य यन्त्रं पवन बलयुतं पूज्य जप्त्वा यथोक्तं
साध्यांशे साधयेत्तत्प्रबलतरमहामोहदं विश्वभेद्यम् ।। १५

यन्त्रं विधिवदाराध्य साध्यपल्लवदेहयुक् ।
साधयेत्प्रोक्तदिवसं सर्वदर्पविवृद्धये ।। १६

गजे गज पदं भूयान्मानुष्ये मानुषं पदम् ।
अहेतुकमदोत्पत्यै साधयेदचिरं परं(दम्)।। १७

आपदुद्धारणस्यास्य(स्या)नादि भैरव संज्ञि(ज्ञ)कः ।
ऋषिश्छन्दस्तु पङ्क्तिः स्याद्देवता वटुकः स्मृतः ।। १८

श्रीं बीजं ह्रीं ततः शक्तिः क्ष्म् र्यूं कीलकमीरितम् ।
ह्रां वामादिषडङ्गं स्याद् ध्यानं देव्यवधारय ।। १९

नीलजीमूतसङ्काशं नीलाञ्जनसमप्रभम्।
शुद्धस्फटिकसंकाशं मणिरत्नशिरोरुहम् ।। २०

दंष्ट्राकरालवदनं किरीटमकुटोज्ज्वलम् ।
भुजङ्गमेखलं देवं मणिकुण्डलशोभितम् ।। २१

खट्वा(ङ्गं)म(सृ)णि पाशं च शूलं चैव तथा पुनः ।
डमरुं च कपालं च वरदं भुजगं तथा ।। २२

दण्डपाणिं महाबाहुं ध्यात्वा मन्त्रं सदा(ज)पेत् ।

श्रीं ह्रीं क्लीं क्ष्म् यूँ वंवटुकाय हंस हंस आपदुद्धारणाय कुरु कुरु
वटुकाय कंचुकनाथाय महाभैरवाय क्ष्म् यूँ क्लीं ह्रीं श्रीं ।।

श्रीं ह्रीं क्लीं च समुच्चार्य क्ष् म्र्यूं वं वमितीरयेत् ।। २३

वटुकाय द्वयं प्रोक्त्वा हंस हंस पदं वदेत् ।
आपदुद्धारणायेति कुरुद्वंन्द्वं परम् ।। २४

वटुकाय पदं पश्चात् कंचुकेति तथा वदेत् ।
नाथाय च महाप्रोक्त्वा भैरवायेति संवदेत् ।। २५

क्ष्म् यूँ क्लीं ह्रीं श्रीं च सं प्रोक्त्वा कमलान्तो मनुर्भवेत्।
पुरश्चर्यार्णसाहस्रं निग्रहे तु सहस्रकम् ।। २६

श्रीमायास्मरकूटमं(म)त्रविलिखेन्मध्ये दलेष्वष्टसु
द्विःप्रोक्तं वटुकाय शब्दमपरान् मन्त्रस्य वर्णान् बहिः ।
अष्टद्वन्द्वदलेषु तद्बहि कलातत्संख्यपत्रेष्वथ
द्वात्रिंशद्दलकादि स्तत(वर्ण) सहितं यन्त्रं लिखेद्भूपुरे।।

एतद्यन्त्रं महादेवि सर्वग्रहहरं परम् ।
सर्वभूतप्रशमनं सर्वरोगनिवारणम् ।। २८

अष्टक्षुद्र प्रशमनं स म(र्व) तापनिवारणम् ।
सर्वभूतवशीकारं सर्वपापनिवारणम् ।। २९

धारणादस्य यन्त्रस्य सर्वरक्षाकरं परम् ।
ए(ये)दानवा महादैत्या ये यक्षा ये च राक्षसाः ।। ३०

पिशाचा ये महासत्वा ये भूता ब्रह्मराक्षसाः ।
अपस्मारग्रहा ये च ये गृहः (ग्रहाः) पिशिताशनः(नाः)।।

महालोहितभोक्तारो वेताला ये च गुह्यकाः ।
चतुष्षष्टिगणाः सप्तसप्तत्युन्मत्तका गृ(ग्र)हाः ।। ३२

अष्टाशीतिमहाभूताः सप्तकोटिमहागृ(ग्र)हाः ।
लोके यावन्ति भूतानि तथा रोग्याण्यनेकशः ।। ३३

तत्सर्वं शमनं याति नीहारमिव भास्करात् ।
चित्रमाल्यां प्रवक्ष्यामि शीघ्रसिद्धिप्रदायिनीम् ।। ३४

सर्वसौभाग्यदां तुर्यां चतुर्वर्गफलप्रदाम् ।
चित्रमाल्यमनोर्देवि ऋषिरानन्दभैरवः ।। ३५

छन्दस्तु देवी गायत्री देवता भैरवःस्मृतः ।
ह्रींकारं बीजमित्युक्तं हुङ्कारं शक्तिरुच्यते ।। ३६

सर्वाभीष्टार्थसिध्यर्थे विनियोगस्तु मायया ।
कराङ्गन्यासजालानि क्रमात्कृत्वा तु भावयेत् ।। ३७

सहस्र पाणि त (प) द्वक्त्रं सहस्रत्रयलोचनम् ।
सर्वाभीष्टफलं(प्रदं)दिव्यं ध्यायेदाकाशभैरवम् ।। ३८

तारं नमो भगवते आकाशेति ततः परम् ।
भैरवायेति निखिलं लोक प्रोक्त्वा प्रियाय च ।। ३९

प्रणतेति जन प्रोक्त्वा परिताप पदं वदेत् ।
मोचनायेति सकलं भूत प्रोक्त्वा निवारणा ।। ४०

ए(ये)ति सर्वाभीष्टपदं प्रदायेति समुद्धरेत् ।
नित्याय सच्चिदानन्द विग्रहाय ततः परम् ।। ४१

सहस्रबाहवे पश्चात् सहस्रं च मुखाय च ।
सहस्रेति पदं प्रोक्त्वा लोचनाय ततः पदम् ।। ४२

सहस्रचरणायाथ करालाय ततः परम् ।
अखिलेति रिपु प्रोक्त्वा संह(हा)रेति वदेत्तः ।। ४३

कारणायानेक कोटि ब्रह्मप्रोक्त्वा कपालमा ।
लालङ्कृताय संप्रोक्त्वा नरप्रोक्त्वा रुधिंवदेत् ।। ४४

रमांस भक्षणायेति महाबलपराक्रमा ।
यमहदन्तरायेति मोचनाय विपूर्वकम् ।। ४५

परमन्त्रेति संप्रोक्त्वापरयन्त्रपरेति च ।
तत्र(न्त्र) विच्छेदनायेति प्रसन्नवदनाम्बुजा ।। ४६

य एह्येह्यागच्छयुगं ममाभीष्टं ततो वदेत् ।
आकर्षय युगं पश्चात् आवेशय युगं वदेत् ।। ४७

मोहयद्वयमुच्चार्य भ्रामयेति द्वयं वदेत् ।
द्रावयेति द्वयं पश्चात् प्रा(पा) तयेति युगं ततः ।। ४८

सिद्धयेति द्वयं प्रोक्त्वा वन्धयति युगं वदेत् ।
भाषयद्वयमुच्चार्य क्षोभयेति युगं वदेत् ।। ४९

भूतप्रेतपिशाचांश्च मर्दयेति युगं वदेत् ।
कम्पयेति युगं पश्चात् पाटयेति युगं ततः ।। ५०

मोटयद्वयमुच्चार्य गुम्फयेति युगं वदेत् ।
कम्पयेति युगं पश्चात् ताडयेति युगं ततः ।। ५१

त्रोटयेति युगं प्रोक्त्वा भेदयेति युगं ततः ।
छादयेति युगं चण्डवातातो छ(ति) ततः परम् ।। ५२

वेगाय स(च) ततः प्रोक्त्वा गम्भीरेति पदं ततः ।
जृम्भणाय च संप्रक्त्वा सङ्कर्षण(य) युगं वदेत् ।। ५३

सङ्क्रामययुगं पश्चात् स्क्राम(सन्त्रास) ययुगंवदेत् ।
प्रवेशय युगं पश्चात् स्तोभयेति युगं वदेत् ।। ५४

स्तभयेति युगं पश्चात् तोदयेति युगं ततः ।
खेदयेति युगं पश्चात् तर्जयेति युगं वदेत् ।। ५५

गर्जयद्विर्नादय द्वी रो ग(द)येति युगं वदेत् ।
घातयद्वयमुच्चार्य वे त (द)येति युगं वदेत् ।। ५६

सकलरिपून् छिन्दयेति भिन्ध(द)येत्यधप(त्यंधय)द्वयम् ।
वन्दयेति द्वयं श्रीं ह्रीं क्लीं कल्पाणेति संवदेत् ।। ५७

कारणायेति संप्रोक्त्वाऽविरतानन्दनेति च ।
महाभोग प्रियायाथ देवदत्तं तथा वदेत् ।। ५८

आनयेतिपदं प्रोक्त्वा दूनयेति युगं वदेत् ।
के(खे)लयेति युगं पश्चात् मेलयेति युगं तथा ।। ५९

प्रपन्न वत्सलायेति प्रति प्रोक्त्वा वदेति न ।
तपनेति पदं प्रोक्त्वा दहनाय वदेत्ततः ।। ६०

अमृतेति पदं प्रोक्तवा किरणेति ततः परम् ।
नयनाय सहस्रेति कोटिवेताल संवदेत् ।। ६१

परि मृ(वृ)ताय मम च श क्र(त्रू) नुच्चाटय द्वयम् ।
वेपयेति युगं प्रोक्त्वा तापयेति युगं वदेत् ।। ६२

सेचयेति युगं प्रोक्तवा मोचयेति द्वयं ततः ।
लो(मो)टयेति द्वयं प्रक्त्वा स्पोटयेति युगं वदेत् ।। ६३

गृह(ह्ण)द्वयं समुच्चार्य नांत(र्यानन्त) वासुकि तक्षकः ।
कार्कोटकपदं पद्‌ममहापद्‌मेति शङ्ख च ।। ६४

गुलिकेति महानागभूषणाय व (मम) प्रिये ।
स्थावरेति पदं प्रोक्त्वा जङ्गमानां विषं वदेत् ।। ६५

नाशयेति युगं पश्चात् प्राशयद्वयमुच्चरेत् ।
भस्मीकृत(कुरु)युगं भक्तजनवल्लेति संवदेत् ।। ६६

भाय सर्गस्थिति प्रोक्त्वा संहारेति वदेद्बुधः ।
कारणाय पदं प्रोक्त्वा थकयन्(कथय/दमय)द्वयमुच्चरेत् ।।

सर्वशत्रूनिति प्रोक्त्वा उद्रेकययुगं वदेत् ।
विद्वेषययुगं पश्चात् उत्साहय पदद्वयम् ।। ६८

उत्पाद(त)ययुगं पश्चात् बाधयेति युगं वदेत् ।
साधयेति द्वयं प्रोक्त्वा दहयुग्मं पचद्वयम् ।। ६९

शोषयद्वयमुच्चार्य पेषयेति युगं वदेत् ।
द्वेषय द्वयमुच्चार्य मारयेति द्वयं वदेत् ।। ७०

भक्षयेति युगं प्रोक्त्वा शिक्षयेति युगं ततः ।
समस्त श्रृ(भू)तान् शिक्षयेति श्रींह्रींक्लीं च तया क्ष् म्र्यूं।।

अनवरतसंप्रोक्त्वा ताण्डवाय वदेत्ततः ।
आपदुद्धारणायेति साधुप्रोक्त्वा जनान् च सम् ।। ७२

तोषयेति युगं प्रोक्त्वा भूषयेति द्वयं वदेत् ।
पालयेति युगं पश्चात् शीलयेति युगं ततः ।। ७३

कामक्रोधपदं लोभ मोह प्रोक्त्वा तथा मद ।
मात्सर्यं शमयेति द्विः दमयेति युगं वदेत् ।। ७४

त्रासयेति युगं प्रोक्त्वा शासयेति युगं तथा ।
[1]क्षितीति पदसंप्रोक्त्वा दहनेति च मारुत ।। ७५

गगनेति च पदं प्रोक्त्वा तरु(र)णीति पदं वदेत् ।
सोमात्मेति ततः प्रोक्त्वा शरीराय वदेद्बुधः ।। ७६

शमदमोपर(ति)पदं तितिक्षायसमा पदम् ।
धानश्रद्धां दापय द्विः प्रापयेति युगं वदेत् ।। ७७

विघ्नच्छेदं विपूर्वंच कुरुद्वन्दं तु तत्परम् ।
रक्षद्वयं क्ष् म्र्यूं क्लीं ह्रीं श्रीं प्रोक्त्वा बह्मणे पदम् ।।

स्वाहान्तको महादेवि चित्रमालेति संस्मृता ।
एतद्गोप्यं महामन्त्रं मालामन्त्रोत्तमोत्तमम् ।। ७९

यस्य स्मरणमात्रेण नन्दन्त्यखिलदेवताः ।
शतवारमिदं मन्त्रं जपेत्सर्वार्थ सिद्धये ।। ८०

त्रिवारं कार्यसिध्यर्थं जपेदेकाग्रमानसः ।
त्रिवारं जपमात्रेण ब्रह्मरक्षोगणादयः ।। ८१

पलायन्ते महाभीताः सिह्मं दृष्ट्वा यथा मृगाः ।
ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्योहुंफट् वदेत् ।। ८२

स्वाहा मन्त्रं महादेवि परमाकाशभैरवम् ।
शरभं भैरवंवक्ष्ये सर्वशत्रुविनाशनम् ।। ८३

---

1. क्षित्यम्बुपदमुच्चार्य इति युज्यते आकाशभैरवमूर्तेरष्टमूर्तित्व-कथनावसरेऽत्र अवश्यवक्तव्य जलपदाऽकथनात् ।

सर्वग्रहहरं पुण्यं सर्वकार्यार्थसाधकम् ।
ओं खें खां खं फट् सि(इ)त्युक्त्वा
प्राणि(ण)ग्रहासि युग्मकम् ।। ८४

हुं फट् प्रोक्त्वा सर्वशत्रुसंहारेति पदं वदेत् ।
णायापदुद्धारणाय शरभाय पदं वदेत् ।। ८५

सालुवाय पदं प्रोक्त्वा पक्षिराजाय तत्परम् ।
हुं फट् स्वाहान्तको मन्त्रः सर्वशत्रुविनाशनः ।। ८६

एतन्मन्त्रप्रयोगानि(स्तु)प्रक्तान्या(प्रोक्ता आ) काश: भैरवे ।
तत्सर्वमत्र योज्यं स्यात् श(शा) रभं सर्वसिद्धये ।। ८७

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
सप्तपञ्चाशोऽध्यायः ।।



## ।। अष्टपञ्चाशोऽध्यायः ।।

मदद्रवाय(या)मन्त्रस्य ऋषिः सर्वेश्वरः स्मृतः ।
पङ्क्तिश्छन्दस्तथा देवि देवता तु मदद्रवा ।। १

मं बीजमथ मा शक्तिः द्राकारं कीलकं तथा ।
त्रिभिर्वर्णैः करन्यासं षडङ्गं च विधानतः ।। २

नानारिप्रमदा द्रावे विनियोगो वरानने ।। ३

तटित्कोटिद्योतां कचभरलसच्चन्द्रवदनां
स्मितज्योत्स्नाजालप्रतिफलितबिम्बाधरदलाम् ।
स्फुरन्मुक्ताहारस्तनभर नमितस्(नतां)तां भगवतीं
चिरं ध्यायेद्देवीं रिपुजनमदद्रावनिरताम् ।। ४

त्रिश्चों नमो भगवति महामाये मदद्रवे ।
सर्वशत्रुमदद्रावं कुरु कुर्वीत(कुर्विति)तत्परम् ।। ५

ब्लूं स्वाहेति महामन्त्रं चतुस्त्रिंशार्णपूरितम् ।
पुरश्चर्यार्णसाहस्रं कार्यसिध्यै वरानने ।। ६

मन्वश्रं श्रीदशारं ऋतु ग्र(गृ)हविवरं वह्निकोणं च बिम्बं
लिख्यान्मूलप्रपूर्णं लिपिवृतमनिशं साध्यनामाखिलार्णैः ।
ध्यात्वादौ लिख्य पूज्याक्षरसमदिवसं साध्यभेदेन जप्तं
नित्यं संसाधयेद्वा निखिलरिपुमदद्रावसिध्यै प्रसिध्यै ।।

रिपुभक्षं(क्ष्यं) मदा(दां) स्मृत्वा ताम्बूलाद्यखिलं सुधीः ।
सपल्लवेन मन्त्रेण साध्वये (साधयेत्) मदसिद्धये ।। ८

मदि(थि)त्वा रिपवः सर्वे तद्भक्ष्यैकाङ्गदर्शनात्(?)
सर्वे ते तु गणांस्त्यक्त्वा भ्रान्ताः शीघ्रं भवन्ति ते ।। ९

पीताभां रक्तभूषाविकसिततरुणाम्भोजहस्तां त्रिणेत्रां
दिव्यैर्माल्याङ्गरागैर्मृदुपटलवरैर्दीप्यमानाखिलाशाम् ।
उत्स्मेरानन्दवक्त्रामरिहृदयगताशेषगर्वापहन्त्रीं
शत्रोर्मता(र्मादा)दिहन्त्रीं सकलभयहरां भावये द्राविणीं ताम्।।

मं द्रां नमोभगवति ततः पश्चान्मदद्रवे ।
मद मो द्विति(दिनि) तत्पश्चान्मोचयेति द्वयं ततः ।। ११

द्रां स्वाहेति महामन्त्रं अष्टत्रिंशत्तुवर्णकम् ।
यथापूर्वं प्रयोगादि कुर्याज्जपपुरःसरम् ।। १२

वृत्तं सु (स्व)राश्रं दिवसेशपत्रं
षडस्त्रवैश्वानरकोणवृत्तम् ।
मदद्रवापूर्वं अजभीति(अजादि)वीतं
सनामकं विश्वमदद्रवाख्यां(ख्यम्) ।। १३

यत्किञ्चिज्जन्तुमुद्दिश्य साधयेद्यन्त्रपूर्वकम् ।
तत्तन्मदं प्रोक्तपरा(यथाप्रोक्तं) द्रवत्याज्यं यथाग्निना ।। १४

चराचरविषैर्भूतैःक्षुद्रतापज्वरादिभिः ।
नानादुरितजालैश्च मुक्तो भवति मन्त्रतः ।। १५

इति शनैरवलोक्य मदद्रवा-
विधिमनन्तविलासपटीयसीम् ।
सकलवैरिमदोन्मद(थ)कारिणीं
भुवि करोतु समस्तजयाय वै ।। १६

महाशास्त(तुः or तृ) मनोर्देवि ऋषिःकामेश्वरःस्मृतः ।
नृच(निचृद्)गायत्रमाख्यातं श्रीशास्ता देवता स्मृतः ।। १७

श्रींबीजं शक्तिराख्यातं(ता)माया लोकविमोहिनी ।
कीलकं मन्मथो देवि, सर्वार्थे विनियोजयेत् ।। १८

षडङ्गमाचरेत् देवि मन्त्रषट्कविभागतः । १९

हरिहरशरीरजन्म(न्मा)
मरतक(कत)मणिभङ्गमेखला यः(या हि) ।
विजयतु वेदशास्ता(स्तुः)
सकलजगच्चित्तमोहिनी मूर्तिः ।। २०

गुणात्मकं(त्रिगुणात्मकं)स(च)तद्)ध्यानं
वक्ष्यामि श्रृणु मत्प्रिये ।
शान्तं शारदचन्द्रकान्तिधवलं चन्द्राभिरामाननं
चन्द्रार्कोपमकान्तिकुण्डलधरं चन्द्रावदातांशुकम् ।
वीणापुस्तकमक्षसूत्रवलयं व्याख्यानमुद्रां करे
बिभ्राणं कलये सदा हृदि महाशास्तं हि वाक्सिद्धये ।। २१

तेजोमण्डलमध्यगं त्रिणयनं दिव्याम्बरालङ्कृतं
देवं पुष्पशरेक्षुकार्मुकलसन्माणिक्यपात्राभयान् ।
बिभ्राणं करपङ्कजैर्मदगजस्कन्धाधिरूढं महा-
शास्तारं सततं नमामि वरदं त्रैलोक्यसंमोहनम् ।। २२

कल्हारोज्ज्वलनीलकुन्तलभरं कालाम्बुदश्यामलं,
कर्पूराकलिताभिरामवपुषं कान्तेन्दुबिम्बाननम् ।
*श्रीचन्द्राङ्कुशपाशशूल विलसत्पाणिं मदान्धद्विपा-
रूढं शत्रुविमर्दनं हृदि महाशास्तारमाद्यं भजे ।। २३

---

* श्रीचन्द्र - sword

श्रींच बिन्दु(सबिन्दुं)समाम्नाय द्वयं ऋं श्रीं ततश्च ह्रीं ।
क्लीं हरिहरपुत्राय पुत्रलाभाय तत्परम् ।। २४

शत्रुनाशाय तत्पश्चात् मदगज पदं ततः ।
वाहनाय महाशास्ताय स्वाहामन्त्रमुच्यते ।। २५

प्रजपेद्वर्णसाहस्त्रं.........(पूज्यकल्हा) हारपुष्पतः ।
अथ चक्रं प्रवक्ष्यामि सर्वाकर्षकरं परम् ।। २६

सर्वेषां पुरुषाणां च गजाश्वानां च सुन्दरी(रि) ।
सर्वेषामेव जन्तूनां जीवाकर्षणकारकम् ।। २७

षट्कोणं पूर्व......(मालिख्य) तदन्तः क्रोधभैरवम् ।
उन्मुखायोन्मुखं लिख्य नामकर्मविगर्भितम् ।। २८

पाशं मायाङ्कुशं बाणान् षट्कोणेषु लिखेत्क्रमात् ।
वेष्टयेद्देवि षट्कोणं परितो माययैकया ।। २९

चक्रमेतत्समालिख्य ततः प्राणान् प्रतिष्टि च (ष्ट्य च) ।
अर्चयेत्पुरतः पीतगन्धपुष्पाक्षतादिभिः ।। ३०

तमेव(वं)संस्थाप्य जपेत् साध्यनाम्ना च मन्त्रकम् ।
एकवारं द्विवारं वा सप्तवारमथापि वा ।। ३१

पूजयित्वा तु शास्तारं गणेशं वटुकं गुरुम् ।
शीघ्रं साध्यः समायाति नात्रकार्या विचारणा ।। ३२

पुरुषो वाथ नारी वा वेश्या वा परभर्तृका ।
अचिरेण समायाति महाशास्ता(स्तुः) प्रसादतः ।। ३३

राजा वा राजनारी वा राजपुत्रोऽथवा प्रिये ।
अमात्यो वा समायाति नात्रकार्या विचारणा ।। ३४

चक्रमन्यं(त्) प्रवक्ष्यामि श्रृणुष्व(ष्वा) वहिता प्रिये ।
मस्त कोष्टक(मस्तकाष्टक)संयुक्तं अष्टकोणं समालिखेत्।।

तन्मध्ये विलिखेत्क्रोध मुन्मुखाधोमुखं प्रिये ।
साध्यनाम च तन्मध्ये विलिखेत्कर्म संयुतम् ।। ३६

क्रोधं तु वेष्टयेद्देवि परितो माययैकया ।
भूपुरद्वयकोणेषु चतुर्थेषु(चतुर्षु च) वरानने ।। ३७

प्राणबीजानि विलिखेत् इन्दुबीजयुतानि च ।
पाशमायाङ्कुशान् बाणानितरेषु लिखेत्ततः ।। ३८

रोचनाकुङ्कुमाभ्यां तु लिखित्वा चक्रमुज्वलम् ।
पुरतो रुचिरे पीठे पुनरेतत्सुरेश्वरि ।। ३९

चक्रं पूर्ववदालिख्य यन्त्रे प्राणान् प्रतिष्ठि च (प्रतिष्ठयेत्) ।
एतच्चक्रं लिखेद्देवि पुनः कृष्णाजिनोदरे ।। ४०

यस्य नाम्ना तु लिखितं तस्य प्राणान् प्रतिष्ठ्य च ।
निक्षिप्याधोमुखं चर्म स्थित्वा तस्योपरि प्रिये ।। ४१

अग्रपीठस्थिते चक्रे देवमारुह्य(मावाह्य) पूजयेत् ।
वटुकस्य प्रियकरं बलिं दद्या दि(द्वि)शेषतः ।। ४२

अष्टोत्तरसहस्रं तु जपेन्मन्त्रं समाहितः ।
शीघ्रं साध्यः समायाति नात्रकार्या विचारणा ।। ४३

राजा वा राजपत्नी वा राजपुत्रोऽथवा प्रिये ।
अचिरेण समायाति महाशास्ता(स्तुः) प्रसादतः ।। ४४

अथान्यं(न्यद्)शृणु देवेशि चक्रं वश्यकरं परम् ।
चक्रं पूर्ववदालिख्य मदनं क्रोधगर्भतम् ।। ४५

बहिश्च मन्यथेनैव वेष्टनं कारयेत्प्रिये ।
हस्ते शिरसि वा पादे धारयेद्यदि साधकः ।। ४६

महाशास्ता(स्तुः) प्रसादेन सर्वलोकप्रियो भवेत् ।
अनेन चक्रवर्येण तत्तत्कामानवाप्नुयात् ।। ४७

मूलमन्त्रेण देवेशि पल्लवादिप्रयोगतः ।
क्रोधे बीजान्तरे देवि नामकर्मयुतानि च ।। ४८

लिखित्वा भूतबीजानि भूतचक्रेषु मध्यतः ।
स्वस्य चक्रस्य मध्ये तु तानि चक्राणि विन्यसेत् ।। ४९

एतद्गुह्यतमं देवि रहस्यमतिदुर्लभम् ।
अमोघत्वात्प्रयोगस्य गोपनीयं सुरेश्वरि ।। ५०

अनेनैव प्रकारेण सर्वान्कामान् सुसाधयेत् ।। ५१

वश्याकर्षणयोर्जपारुणनिभं संमोहने श्यामलं
स्तम्भे हेमरुचिर्विषापहरणे ज्ञाने सुधानिर्मिणां(निर्मलम्)
द्वेषोच्चाटनमारणे खरमरुत्कालाम्बुदाहं(भं)सदा
ध्यायेत्सर्वफलप्रदं हृदि महाशास्तं भजे शाङ्करं(रिम्) ।।

षट्कर्माणं(र्मणां)प्रयोगेषु चक्ररेख(खा)क्रमं ततः ।
विस्तरेण प्रवक्ष्यामि ध्यानं च शृणु सुव्रते ।। ५३

मन्त्रस्यास्य...(ह्य) मोघत्वाद्रहस्यं न प्रकाशयेत् ।। ५४

मरतका(क्ता) चल मेखलविभ्रम न् (?)(मं)
...(म)णिमयाहरितोज्ज्वलवक्षसम् ।
हरिहरात्मजमाकलये महा-
नवमिवारुणकान्तिपरिष्कृतम् ।। ५५

शक्तिं षट्कोणमध्ये विलिखतु मणिमान्(?)सत्यबिट्वग्रशूलं
(मस्तविद्धाग्रशूलम्)
तद्बाह्ये भानुवेष्टं विलिखतु रुचिरंमस्तकेष्वष्टशक्तिम् ।
. . . . . . . . . . . . . . . . . . . . . . . .
चक्रं त्रैलोक्यवश्यं हरिहरतनयाधीश्वरं श्रीप्रदं च ।। ५६

अथान्यं(न्यद्)संप्रवक्ष्यामि शृणु चक्रं वरानने ।
मूषिकाणां च सर्वेषां गजानां वाजिनां तथा ।। ५७

राज्ञां च राजपुत्राणां राजस्त्रीणां तथैव च ।
सामान्यानाममात्यानां सकलानामपि प्रिये ।। ५८

सर्वेषामेव जन्तूनां आकार्षणकरं परम् ।
पूर्वं षट्कोणमालिख्य तदन्तः क्रोधभैरवम् ।। ५९

रात्रौ तु विजने देशे महाशास्तं प्रपूजयेत् ।
देवमावाह्य तन्मध्ये अलङ्कुर्याद्विशेषतः ।। ६०

चक्रं पूर्ववदालिख्य देवि कृष्णाजिनोदरे ।
श्मशाने तत्क्षणं देवि चक्रप्राणान् प्रतिष्टि(ष्ठ्य) च ।। ६१

खनित्वा निज(ऽजिन)संस्थःसन् अष्टोत्तरसहस्रकम् ।
जपेद् धीमान् महादेवि साध्यमा(आ)यात्यसशयः(म्) ।। ६२

अन्यच्चक्रं प्रवक्ष्यामि शृणु ...... (वश्य) करं प्रिये ।
बहिश्च मदनेनैव वेष्टयेत्क्रोधभैरवम् ।। ६३

चक्रं चैवं लिखित्वा तु प्राणान् संस्थाप्य यत्नतः ।
रजते हेमपट्टे वा ताम्रे वा निर्मलोदरे ।। ६४

लिखित्वैवं ततः पश्चात् प्राणान् संस्थाप्य पूजयेत् ।
कण्ठे शिरसि हस्ते वा धारयेद्यदि साधकः ।। ६५

सर्वलोकप्रियो भूत्वा मोहयेदखिलं जगत् ।
वशयत्यखिलान् लोकान् नात्रकार्या विचारणा ।। ६६

अनेन चक्रवीर्येण सर्वकार्याणि साधयेत् ।
साधयेत् सर्वकार्याणि ततः सिध्यन्ति सुव्रते ।। ६७

एतद्गुह्यतमं गौरि रहस्यमतिदुर्लभम् ।
अमोघं सर्वकार्येषु गोपनीयं प्रयत्नतः ।। ६८

क्रूरचित्ताय देवेशि न दातव्यं कदाचन ।
दातव्यं गुरुभक्ताय सत्यसन्धाय धीमते ।। ६९

षट्कोणमध्ये प्रविलिख्य देवि षडङ्गमन्त्रैः परिलेख्य कोणे।
उर्वीपुरं वज्रचतुष्कयुक्तं यन्त्रं जगद्वश्यकरं नमामि ।। ७०

पुनरन्यं प्रवक्ष्यामि मन्त्रं सर्वार्थ साधकम् ।
ह्रीं हरिहरपुत्राय पुत्रलाभाय तत्परम् ।। ७१

शत्रुनाशायशब्दान्ते मदप्रोक्त्वा गजेति च ।
वाहनाय महाशास्तायनमो मन्त्र उच्यते।। ७२

हरिशब्दं समुद्धृत्य हरशब्दं ततः प्रिये ।
पुत्राय पुत्रलाभाय मदप्रोक्त्वा गजेति च ।। ७३

वाहनाय पदं प्रोक्त्वा महाशास्ताय तत्परम् ।
ह्रीं ह्रीं श्रीमिति संप्रोक्त्वा परशब्द द्वयं ततः ।। ७४

वह्निजाया समायुक्तः चतुस्त्रिंशति वर्णकः।। ७५

हरिहरपुत्राय पुत्रलाभाय मदगजवाहनाय महाशास्ताय ।
ह्रीं ह्रीं श्रीं पर पर स्वाहा ।। ७६

महाचक्रं प्रवक्ष्यामि महाशास्तस्य सुन्दरि ।
आदौ बिन्दुं समालिख्य बिन्दौ क्लीं कामबीजकम् ।। ७७

तच्छ्रींकारेण संवेष्ट्य तच्छकारेण वेष्टयेत् ।
षकारं क्रोधबीजेन विक्रयान्युक्तरमाक्रमात् ।। ७८
(विलिखेदुत्क्रमाक्रमात् )

तद्बीजपादपार्श्वे तु विलिखेन्नववर्णकम् ।
ऐं ह्रीं प्रोक्त्वा महाशास्तायनमः संलिखेत्प्रिये ।। ७९

वेक्ष्य(ष्ट्य) तत्प्रणवेनाथ तद्बाह्ये षोडशं दलम् ।
दलेषु विलिखेद्देवि *स्वरानमामितिक्रमात् ।। ८०

दलमूले च मध्ये च ह्रीं बीजाक्ष....(र)मालिखेत् ।
पङ्कजस्य चतुर्दिक्षु व कारं तु मणिं लिखेत् ।। ८१

पद्मोत्तरादि पार्श्वेषु गणकं क्षिप्र संज्ञिकां (ज्ञकम्) ।
गुरुं च विलिखेद्धीमान् ओं श्रीं ह्रींश्रीं तथा तु क्लीं ।। ८२

पि(क्षि)प्रगणपदं प्रोक्त्वा पद(त)येन्न(नम)तत्परम् ।
क्षिप्रसिद्धि प्रदो देवि मन्त्रः क्षिप्रगणेशितुः ।। ८३

शक्तीरमाभ्यां संयोज्य गुरुभ्यो नम इत्यपि ।
मन्त्रोऽयं सर्वसिद्धीनां कारणं भोगमोक्षयोः ।। ८४

अष्टमस्तकसंयुक्तमष्टकोणं लिखेद् बहिः ।
अष्टकोणे लिखेद्देवि सिताद्या(असिता)द्यष्टभैरवान् ।। ८५

अन्तरालेद्य(ष्व)ष्टमात्रान्(तृः)शूलग्रेष्वष्टदिक्पतीन् ।
तद्बहिः कोणषट्के तु षट्शास्तं(स्तृन्)विलिखेत्क्रमात् ।।८६

महाशास्ता जगच्छास्ता शत्रुशास्ता तथैव च ।
सर्वशास्ता च शास्ता च प्रशास्ता षट्विधाः स्मृताः ।। ८७

---

* स्वरान् अं आं इति क्रमात् ।

तत्सिद्धिषु(सन्धिषु)षडङ्गानि तद्बाह्ये विलिखेद्बुधः ।
मायां नारायणीरूपां मातङ्गीं विश्वमोहिनीम् ।। ८८

लिखेद्देवी(वि) शिवांगस्छां (वाङ्गस्थां)
अग्ने(अग्रे) साङ्गां सवाहनी(ना)म् ।
चतुर्दिक्षु लिखेद्देवं पुरतः सुप्रदीपकम् ।। ८९

पूजाचक्रमिदं देवि
विभां क्षेमो(विश्वक्षेमै)कसाधनम् ।
सर्वसम्पत्प्रदं पुण्यं धारणात्सर्वसिद्धिदम् ।। ९०

एतच्चक्रं समालिख्य प्राणान् संस्छा(था)प्य मन्त्रवित् ।
हेमपट्टे च रजते ताम्रे वा चन्दनेऽपि वा ।। ९१

श्वेतार्कफलके वापि शिलापट्टेऽथवा प्रिये ।
रोचनागरुकर्पूर कस्तूरी कुङ्कुमादिषु(भिः) ।। ९२

ज(जा)न्वाकृतिं यथा चक्रं लिखित्वा पूजयेत्प्रिये ।
महात्म्यं यन्त्रराजस्य मया वक्तुं न शक्यते ।। ९३

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
अष्टपञ्चाशोऽध्यायः ।।



## ।। एकोनषष्टितमोऽध्यायः ।।

मन्त्रस्य द्राविणीदेव्या अमृतेशो ऋषिः स्मृतः ।
छन्दो गायत्रमाख्यातं देवता द्राविणी स्मृता ।। १

द्रां बीजमाहुतिः शक्तिः द्रावसिध्यै नियोगकम् ।
ह्रां ह्रीमादिकरन्यासं षडङ्गं च विधानतः ।। २

पीताभाममलाम्बरां त्रिन(ण)यनां दिव्याम्बरागो (रप्रो) ज्ज्वलां
सुस्मेरां मणिभूषणां विकसित स्वर्णाब्जहस्ताम्बुजाम् ।
विश्वेशीममृतांशुभिस्तनुभवैराप्लावयन्तीं.............
............................................................।। ३

........................ द्राविणीति ततः परम् ।
अमृतेश्वरि तत्पश्चात् ठं झं ठ व तदनन्तरम् (?)।। ४

सर्वलोकेति कठिनं द्रावयेति द्वयं ततः ।
ह्रीं स्वाहेति महामन्त्रं चतुर्विंशत्तुवर्मकम् । (?) ५

पुरश्चर्यार्णसाहस्रं प्रयोगान् साधयेत्ततः ।
मनुदश ऋतुपत्रं वह्निकोणं च वृत्तं
मनुवृतमथ साध्यं तारपद्मार्णपूर्णम् ।
त्रिभुवनजनचित्तद्रावसंमोहहेतु
न तु(त) जनफलसिद्दिं(द्ध्यै)द्राविणीयन्त्रमेतत् ।। ६

अस्य (यास्तु)कठिनं वस्तु प्रोक्तवासर साधनम् ।
यथा चन्द्रोपलं चन्द्र-दर्शनात् द्रवति क्षणात् ।। ७

तथा जनानां हृदयं द्राविण्या द्रवति क्षणात् ।
कामराजाख्यमन्त्रस्य संमोहो ऋषिरीरितः ।। ८

जगतीछन्द आख्यातं देवता काम उच्यते ।
क्षीं बीजमाहुतिः शक्तिः द्रावसिध्यै नियोगकम्(:) ।। ९

क्लामित्यादिकरन्यासं षडङ्गं चाचरेद्बुधः ।
पाशाङ्कुशधरं कामं इक्षुचापध(व)रान्वितम् ।। १०

जपाकुसुमसंकाशं द्रावसिध्यै भजेत्सदा ।
नमःकामाय देवाय सर्व प्रोक्त्वा जनप्रिया ।। ११

एति(येति)सर्वजनप्रोक्त्वाहृदये(यं)द्रावयेति मे ।
वशंकुरु युगं स्वाहा चतुः स्त्रिंशति वर्णकः ।। १२

ततः (नमः) कामाय देवताय(देवाय) सर्वजनप्रियाय
सर्वजनहृदयं द्रावय मे वशं कुरु कुरु स्वाहा [34] ।। १३

ह्रीं नमो भगवते शोत्रिणि(?) प्रलय वायुवेगेति ततः
कामाय देवताय(?)सर्वजनप्रियाय सर्वजनहृदयं द्रावय
मे वशं कुरु कुरु स्वाहा । [38] (?) ।। १४

पुरश्चर्यार्ण साहस्त्रं होमे पञ्च प्रसूय(न)कम् । १५

बिन्दुवह्निरसव स्वरं ततः षोडश ... धरणि बिम्ब-
युतं च मूलमेव तु । कलादलपद्मेष्वखिलेन
दनुभूपुरके क्लीं वाह्यशृङ्ग वाह्य शूलक सदग्रक
साध्यं द्रावकं सकल वैरिजनानाम् ।। १६

एतद्यन्त्रं महादेवि लिखेत्कृष्णाज(जिनो)तोदरे ।
धारकश्चर्म संस्थः सन् जपेद्दशसहस्रकम् ।। १७

साध्याभिमुखमासीनः द्रावयेदखिलं जगत् ।
तस्य दर्शनमात्रेण सर्वे मुह्यन्ति जन्तवः ।। १८

मातरं पितरं पुत्रं भ्रातरं पतिरे(मे) व च ।
सर्वं बन्धुजनं सत्कां(त्यक्त्वा)साधकस्य वशाः स्त्रियः ।।१९

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
एकोनषष्टितमोऽध्यायः ।।



## ।। षष्टितमोऽध्यायः ।।

शोषिण्याश्चैव मन्त्रस्य ऋषिर्वायुः समीरितः ।
छन्दो जगतिराख्याता देवता शोषिणी मता ।। १

श्रीं बीजमाहुतिःशक्तिः शोषसिध्यै नियोगकम् ।
शमित्यादि करन्यासं षडङ्गं तदनन्तरम् ।। २

पुण्ड्रेक्षुचापकुसुमेषुधरां सुरेशीं
पाशाङ्कुशान्वितकरां सुकुमारदेहाम् ।
वे ... (गे) न शत्रुजनचित्त सुशोषिणीं तां
ध्यायेत्सदा हृदि महापरमेश्वरीं ताम् ।। ३

ह्रीमोन्नमो भगवति शोषिणीति ततः परम् ।
प्रलयं वायु संप्रोक्त्वा वेगिनि यं च धूम(मि)ति ।। ४

ममा रि(नि)ष्ट पदं प्रोक्त्वा हृदयं शोषये ति च ।
शीघ्रं शोषयसंप्रोक्त्वा स्वाहान्तो मन्त्र उच्यते ।। ५

पुन (र)श्चर्यार्णसाहस्रं होमे हेम प्रसूनकम् ।
अष्टविंशतिकोष्टे तु क्लीं पूर्वं मनुमालिखेत् ।। ६

साध्यनामादिशूलाग्रेष्वालिखेत् साध्यवृक्षके ।
शास्तु रावितितेवावि(रायतने वापि)रिपुगेहे खे(खने)द्बुधः ।।

षट्सहस्रं जपेन्मन्त्रं शोषयेद्रिपुमात्मनः ।
शुष्को भवति देवेशि तत्क्षणात्काष्टवद्रिपुः ।। ८

ह्रीं(ओं)नमो भगवति शोषिणि प्रलयवायुवेगिनि ......
(यं धूं) ममारि(नि)ष्टहृदयं शोषय शीघ्रं शोषय स्वाहा [38] ।।

अथ कन्दर्पमन्त्रस्य ऋषिर्देवेश्वरः स्मृतः ।
छन्दो जगतिराख्याता कन्दर्पो देवता मतः ।। १०

तारं बीजं नमः शक्तिः स्वाहा कीलकमुच्यते ।
षडङ्गमाचरेद्देवि मन्त्रषट्कनि(वि)भागतः ।। ११

पाशाङ्कुशधरं देवं पुष्पबाणधनुर्धरम् ।
जपाकुसुमसंकाशं कन्दर्पं सिद्धये भजे ।। १२

ओं नमः पदमुच्चार्य कन्द ...(र्पा) य ततः परम् ।
सर्व ज्ञा(ज)न प्र(प)दं प्रोक्त्वा ततः संमोहनाय च ।। १३

ज्वल ज्वल प्रज्वल द्विः ततः सर्वजनं वदेत् ।
मे वशं तु ततः प्रोक्त्वा आनय स्वाहया युतः ।। १४

अष्टत्रिंशतिवर्णोऽयं अभीष्टफलदायकं (कः)
पुरश्चर्यार्णसाहस्रं षट्सहस्रं त्रि(क्रि) यादिषु ।। १५

एकोनचत्वारिंशत्कोष्ठमालिख्य मन्त्रवित् ।
कोष्ठेषु विलिखेत्क्लीं च मूलमन्त्रं ततः परम् ।। १६

प्रिये कोणाग्रे विलिखेत् मू(शू ?) लाग्रे साध्यनाम च ।
ह्रीं कारेण च तद्वेष्ट्य बहिरष्टदलं लिखेत् ।। १७

देले (दले)दम(मद) न गायत्रीं तद्बाह्ये षोडशं दलम् ।
दले क्रीं च स्वरान् लिख्य द्वात्रिंशे कादि सान्तकम् ।। १८

बहिः भूपुरमालिख्य वज्रकोणसमन्वितम् । (?)
एतद्यन्त्रं साध्यनाम पादरेण(णौ) विलिख्य तु ।। १९

अधः साध्याकृतं(तिं)लिख्य प्राणानावाह्य पूजयेत् ।
स्पृष्ट्वा तु दशसाहस्रं जप्त्वा साध्यादि दिङ्मुखः ।। २०

तत्क्षणाद्वशमायाति यथा कन्दर्पदर्शनात् ।
दशयोजन संस्थानां दूरस्थामानवेद्वयुं(नामपि स्वयम्)।।२१

एतस्य दर्शनाद्देवि सर्वे मुह्यन्ति जन्तवः ।
निपीतान्धतमः पुञ्जे यथा होमो(?) प्रवेशतः(?) ।। २२

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
षष्टितमोऽध्यायः ।।



## ।। एकषष्टितमोऽध्यायः ।।

बन्धिन्याश्चैव मन्त्रस्य ऋषिरुन्मत्तभैरवः ।
छन्दो जगति संप्रोक्तो(क्तं) देवताबन्धिनी मता ।। १

क्लीं बीजमाहुतिः शक्तिः योगः स्तम्भे महेश्वरि ।
क्लामित्यादि करन्यास(न्)षडङ्गाचा(ना)नरे(चरे)त्क्रमात्।।

श्यामाभां रक्तवस्त्रां स्तनभरनमितां तारहारां त्रिणेत्रां
गम्भीरां सु(शु) प्रसन्नां विविधमणिगणैर्भूषितां सुन्दराङ्गीम् ।
त्रोटीपाच्चं(शं)च चापं कुसुमशरवरं धारयन्तीं च शत्रोः
जिह्वाकर्णा द्विवृष्टि(दिवृत्ति)श्रुति(स्मृति)करवाग्बन्धिनीं
तां नमामि।।

क्ली मों नमो भगवति बन्धिनीति ततः परम् ।
*कब(रा)लेति मुखी प्रोक्त्वा सर्वशत्रुपदं वदेत् ।। ४

वाचं बन्धय द्वि(:) जिह्वां कीलयेति द्वयं वद्त् ।
शीघ्रं च वश्यमित्युक्त्वा कुरु द्वन्द्वं ठ ठ [1]स्ततः ।। ५

हुं फट् स्वाहेति मन्त्रः स्यात् जिह्वाबन्धकरं रिपोः ।
पुरश्चर्यार्णसाहस्त्रं होमे धूयुर[2](धुस्तुर)पुष्पकम् ।। ६

षट्पञ्चाश्रं लिखेत्कोष्टं मध्ये लं लां च लं लिखेत् ।
कोष्ठेषु मूलमालिख्य शूलाग्रे साध्यनाम च ।। ७

---

* बगलामुखीवत् कबलामुखीत्यपि वक्तुं शक्यते । तत्त्वं ज्ञेयम् ।
1. ठ ठ श्चनुः इति मातृकायाम् ।   2. धत्तूरपुष्पमित्यर्थः ।

साध्यवृक्षे लिखित्वा तु तस्य प्राणान् प्रतिष्ठ्य च ।
शास्तुश्च गजपादे तु खने(त्)स्तम्भनसिद्धये ।। ८

पुनः स्नात्वा जपेद्रात्रौ षट्सहस्रं वरानने ।
अथ मन्मथ मन्त्रस्य विश्वेशो ऋषिरुच्यते ।। ९

छन्दोऽपि जगती प्रोक्ता देवता मन्मथो मतः ।
क्लीं बीजं श्रीं ततः शक्तिः योगः संमोहने नृणाम् ।। १०

क्लां ह्रामादि करन्यासं षडं त(ङ्गं च) क्रमान्न्यसेत् ।। ११

वीणावादनलोलहस्तमतुलं कस्तूरिरागोज्ज्वलं
जातीपुष्पलसत्कचं मणिवरैः संभूषि ..... (तोरःस्थलम्)।
श्रीमत्कुण्डलमण्डितं करवरे लीलाशुकं मोहनं
ध्यायेत्तं वरदान *पाणिनमहं(?) बन्धूकतुल्यप्रभम् ।। १२

कामं मायां च कमलां तारं प्रोक्त्वा नमः पदम् ।
मन्मथाय वदेत्पश्चात् सर्वराजपदं वदेत् ।। १३

ध्रु(स्त्री)पदं पुरुषेत्युक्त्वा सर्वदृ(दु)ष्ट मृगेति च ।
सर्वसत्वपदं सर्वलोक प्रोक्त्वा वशंकरा ।। १४

मदनेति च यः पूर्वं कामेत्युक्त्वेश्वराय च ।
सर्व प्रोक्त्वा जनं मेति वशमानय तत्परम् ।। १५

स्वाहान्तो मन्त्रराजःस्यात् सर्वसंमोहनो नृणाम् ।
पुरश्चर्यार्णसाहस्रं क्रियासिद्धौ दश स्मृतम् ।। १६

---

* पाणिमनघं

चन्द्र बाणं तथाचाष्टकोणं षोडशतछतं (तच्छदम्)
चतुर्दलं च देवेशि लिखेद्रेखाचतुष्टयम् ।। १७

एतेषु मूलमन्त्रं तु विलिखेद्भूपुरान्तकम् ।
एतद्यन्त्रं महेशानि साध्यवृक्षे विलिख्य तु ।। १८

साध्यपादरजोयुक्तं तदङ्गादिसमन्वितम् ।
कृत्वा प्राणान् वरारोहे जपेद्दशसहस्रकम् ।। १९

साध्यं(:)शीघ्रं वशं याति मरणान्तं महेश्वरि ।
वश्यप्रयोगे देवेशि इक्षुकोदण्डधारणम् ।।(रिणम्) २०

सन्धाय कौसुमं काम(मं)बीज विस्फुति(स्फूर्ति)भास्त(व)रम्।
प्रहरन्तं साध्यतनौ चिन्तयेद् दृढमानसः ।। २१

कबलीकृतमत्यन्तविह्वलं गाढमूर्छितम् ।
तस्य देवस्य देवीभिरनेकशतकोटिभिः ।। २२

कामाङ्कुशप्रहारेण हन्यमानशिरस्तटम् ।
पुनः शक्तिभिरन्याभिः भीमनिर्भर्त्सनोक्तिभिः ।। २३

त्रिफणाकाक(र)पाहे(शे)न बध्यमानस्वकन्धरम् ।
कामानले तप्यमानमन्याभिर्धूम्रशक्तिभिः ।। २४

पुनः शक्तिभिरन्याभिरर्द्यमानं च कर्मभिः ।
साधकस्याङ्घ्रियुगलं निपीडय निपीडय ।। २५

वर्तस्व साधकव हे(शे) भर्त्सितं चान्यशक्तिभिः ।
आकुलीकृतमन्याभिरन्याभिर्विह्वलीकृतम् ।। २६

ताड्यमानं चपेटेन वक्षस्यन्याभिरञ्जसा ।
इति साध्यं विचिन्त्यैव जपेन्मन्त्रमनाकुलः ।। २७

अनेनैव वशीकुर्यात् अयत्नेनायतेक्षणी(णा)म् ।
शीघ्रं सिध्यति मन्त्रार्थं(र्थः) नात्रकार्या विचारणा ।। २८

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
एकषष्टितमोऽध्यायः ।।



## ।। द्विषष्टितमोऽध्यायः ।।

मन्त्रस्य मोहिनीदेव्या दुर्मदो ऋषिरीरितः ।
छन्दोऽतिजगती प्रोक्ता मोहिनी देवता मता ।। १

ब्लूं बीजमाहुतिः शक्तिः मोहसिध्यै नियोगकम्(:) ।
ब्लां कामादि करन्यासं षडङ्गं क्रमतो भवेत् ।। २

तिमिराभां महादेवीं पाशाङ्कुशकराम्बुजाम् ।
मोहिनीं मोहसिध्यर्थे ध्यायेत्तिमिरवाससी(म्) ।। ३

ब्लूं मों नमो भगवती(ति) महामोहिनि तत्परम् ।
अश्वपति गज प्रोक्त्वा ... (प)ति प्रोक्त्वा नरेति च ।। ४

पति ना वार संप्रोक्त्वा पति राज चतुष्टयम् ।
वश्यं कुरु युगं राज प्रजावश्यं कर(कुरु)द्वयम् ।। ५

सर्वजनं मोहय द्विः स्वाहान्तो मन्त्र उच्यते ।
पुन(र)श्चर्यार्णसाहस्रं क्रियायां दशकं भवेत् ।। ६

मोहय(ये)दखिलं लोकं तिमिरेण यथा भवेत् ।
नवरेखा लिखेद् धीमान् तिर्यगूर्ध्वं यथा क्रमात् ।। ७

चतुः षष्टि महाकोष्टे मूले(ल)मन्त्रं क्रमाल्लिखेत् ।
शूलाग्रे साध्यनामादि लिखित्वा यन्त्रमुत्तमम् ।। ८

प्रणान् संस्छा(स्था)प्य चाराध्य सद(षड)ङ्गादिसमन्वितम्।
सहस्रं दश संस्मृत्य जपेद्देवीमनन्यधीः ।। ९

मोहने तु महामोहा तिमिराणां कदम्बकम् ।
किं(वि)किरन्तीसाध्यरूपं स्वयं च तिमिराकृतिः ।। १०

अन्धकारे महाकूपे पातयन्ती च साध्यकम् ।
तस्यैव स्मृतिसर्वस्वं ख(खा)दन्तीमुग्रदंष्ट्रया ।। ११

नष्टं तमोवशादिष्टं भ्रष्टं भ्रान्तं स्वतेजसा ।
प्रकाशमानमात्मानं संविदानन्दमुद्रया ।। १२

एवं ध्यात्वा जपेन्मन्त्रं मोहयेदखिलं जगत् ।
धारयेद्यन्त्रराजं तं मोहनं तु सदा नृणाम् ।। १३

मकरध्वजमन्त्रस्य मदोन्मत्तो ऋषिः स्मृतः ।
छन्दो जगतिराख्याता देवता मकरध्वजः ।। १४

तारं बीजं नमः शक्तिः स्वाहा कीलकमुच्यते ।
मां क्लामादि करन्यासं षडङ्गं च विधानतः ।। १५

चामीकर गृह(सम)प्रख्यं पाशाङ्कुशकराम्बुजम् ।
नानास्तम्भकरं देवं ध्यायेत्तं मकरध्वजम् ।। १६

तारं नमो भगवते मकरेति ध्वजाय च ।
भक्तेति जनवश्याय शत्रुप्रोक्त्वा जनेति च ।। १७

सेना प्रोक्त्वा भ जं (भं ज)काय युद्धे दुर्मेति दाय च ।
मदोन्मत्ताय मन्त्रः स्यात् स्वाहा युक्तो महेश्वरि ।। १८

पूर्ववत्तु पुरश्चर्या क्रियासिद्धौ तथा भवेत् ।
षट्सप्त कोष्ठके यन्त्रे लिखेन्मन्त्रं च शूलके ।। १९

साध्यनामादिसंयुक्तं स्तम्भनं कुरुते नृणाम् ।
जिह्वालैर्नागपाशैश्च बन्धनैश्च स्मरेद्बुधः ।। २०

सेनादिस्तम्भसिद्धिः स्यात्पीतवर्णातु देवता ।
गगनस्तम्भने देवि निरोधनकरं स्मरेत् ।। २१

सलिलस्तम्भसिद्धौ तु वसुधारूपधारिणम् ।
खड्गादिस्तम्भने ध्येयं वज्रनिष्ठुरविग्रहम् ।। २२

जिह्वास्तम्भे साध्यजिह्वामानाभितलगामिनीम् ।
उत्पाटयन्तमचिरादास्ते(स्ये)स्तंभ(भं) प्रवेश(श्य) च।। २३

अथवा वामहस्ताग्रतीक्ष्णंदंष्ट्रनखाङ्कुशैः ।
प्रोतमाकृष्य(कर्ष)माणं च साध्यजिह्वामनुस्मरेत् ।। २४

तत्क्षणात्स्तम्भयेल्लोकं यन्त्रं तत्तस्थले खनेत् ।। २५

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
द्विषष्टितमोऽध्यायः ।।



## ।। त्रिषष्टितमोऽध्यायः ।।

उन्मादिन्यास्तु मन्त्रस्य दुर्मुखो ऋषिरुच्यते ।
छन्दो जगतिराख्याता देवतोन्मादिनी मता ।। १

सं बीजमाहुतिः शक्तिः योगोन्मादे महेश्वरि ।
सामित्यादिकरन्यासं षडङ्गं तत्क्रमाद्‌भवेत् ।। २

धूम्राभां धूम्रवसनां मोदोन्मत्तविलोचनाम् ।
पाशाङ्कुशधरां देवीं सर्वोन्मादनकारिणीम् ।। ३

तारं नमो भगवति संपूर्वं(सर्वपूर्वं) संवदेत्सुधीः ।
जनोन्मादिनि शत्रुं ते महाभैरवी तत्परम् ।। ४

व्याघूर्णनीलोत्पलेति नेत्रेचन्द्र(ण्डा)दृहास च ।
सी(शी)ले स्वाहा मनुः प्रोक्तः सर्वोन्मादप्रदायकः ।। ५

पुरश्चर्या यथा पूर्वं प्रयोगे पूर्ववद्‌भवेत् ।
षट्त्रिंशत्कोष्ठके यन्त्रे सस्(स़)ताराभ्यां विवर्जितम् ।। ६

मूलमन्त्रं लिखित्वा तु मध्ये बीजद्वयं भवेत् ।
शूलाग्रे साध्यबीजं च तदङ्गादिसमन्वितम् ।। ७

शत्रुप्राणान् समावाह्य लेखनं शत्रुवृक्षके ।
उन्मत्ताद्यविलेपःस्यात् खनेद्रात्रौ श्मशानके ।। ८

स्नात्वा जपेत्सहस्त्रं तु दशाहं विजितेन्द्रियः ।
तत्क्षणाद्रि पुन(पवः)सर्वे उन्मत्ता भ्रान्तमानसाः ।।

उन्माद गृ(ग्र)हराजेन ग्रस्ता नश्यन्ति सुन्दरि ।
चक्रोद्धारान्निवृत्तिः स्यात् क्षीराज्याद्यैश्च होमतः ।। १०

मनोभवस्य मन्त्रस्य सर्वरञ्जनको ऋषिः ।
छन्दो जगतिराख्याता देवता तु मनोभवः ।। ११

द्रां बीजं ह्लीं(द्रीं)...(ततः)शक्तिः क्लीं बूं सःकीलकं मतम् ।
योगस्त्वाकर्षणे ज्ञेयः पञ्चाङ्गं पञ्चबीजतः ।। १२

बन्धूककुसुमप्रख्यं पुष्पबाणधनुर्धरम् ।
पाशाङ्कुशधरं देवं वन्देऽहं तु मनोभवम् ।। १३

द्रां द्रीं क्लीं ब्लूं च सः प्रोक्तः आंह्लीं क्रोमिति संवदेत् ।
हसः ख प्रो(फ्रें) न्नमो भगवतेति मनोभवाय पदं वदेत् ।।१४

सर्वजनपदं प्रोक्त्वा हृदयं रञ्जय द्वयम् ।
पञ्चबीजं विलोमेन मन्त्रस्त्वाकर्षसिद्धिदः ।। १५

पूर्ववत्तु पुरश्चर्या क्रियासिद्धौ तथा भवेत् ।
वेदवृत्तं लिखेद्धीमान् वृत्ते कोष्ठाष्टकं पृथक् ।। १६

षट्कोणं विलिखेद्बाह्ये तेषु मूलं यथाक्रमम् ।
षट्कोणाग्रस्थ शूलेषु साध्यादीन्विलिखेत्क्रमात् ।। १७

साध्यवाम पदाक्रान्त धूसरे चक्रलेखनम् ।
कृत्वा तत्प्राणमावाह्य तदङ्गादिसमन्वितम् ।। १८

स्पृष्ट्वा जपेत्सहस्रं तु ध्यात्वा देवं मनोभवम् ।।
स्वागृहात्तद्गृहात्(हम्)तत्तु विकिरेत्साधकोत्तमः ।। १९

तन्मार्गेण समायाति योषिद्वा पुरुषोऽथवा ।
आवृत्त विस्फुटं नव्यडाडिमोसामर(दाडिमेन सम)प्रभम् ।।

आताम्रतुरगारूढमूलचन्द्रकरालकम् ।
बल्लाहेमकशावेत्र लतापाशलसत्क थ(रम्) ।। २१

जगन्मोहनवेषाढ्यं ध्यायेत्तं जगतीश्वरम् ।
आकृष्यमाणं पाशेन कण्ठे बद्ध्वा कराञ्जलिम् ।। २२

भीतविह्वलमासीनं जीवितं भ्रान्तचेतसम् ।
निखार(य)ब्रह्मरन्ध्रार(न्त)मङ्कुशं पाटलप्रभम् ।। २३

आकृष्यमाणं देवैश्च आज्ञाशक्ति विजृम्भणैः ।
आकुलीकृतचेलान्तं संस्त्र(स्त्रंस)मान शिरोरुहम् ।। २४

पारवश्यविमुक्ताङ्गं भयनष्टा(ष्ट)स्मृतस्(तिं)तथा ।
ध्यायेत्साध्यमनेनैव विधिनाकर्षयेन्नरः ।। २५

तन्मार्गेण समायाति साध्य(ध्यो) नात्र विचारणा ।। २६

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
त्रिषष्टितमोऽध्यायः ।।



## ।। चतुष्षष्टितमोऽध्यायः ।।

श्रीरेणुकाया मन्त्रस्य भार्गवो ऋषिरीरितः ।
पङ्क्तिश्छन्दो महादेवि रेणुका देवता मता ।। १

क्लीं बीजं क्लां ततः शक्तिः क्लीं कीलकमी (मपी)रितम् ।
इष्टकाम्यार्थसिध्यर्थे विनियोग(गो)वरानने ।। २

क्लामित्यादिकरन्यासं षडङ्गं चैव तत्क्रमात् ।।३

वामेशूलकपालयुग्ममितरे खड्गं क्वणद्डिण्डिमं
बिभ्राणां करपङ्कजैस्त्रिणयनां नागाष्टभूषोज्ज्वलाम् ।
नानाकोटियुगान्तसूर्यसदृशां नानाज्वलद्भूषणां
दक्षालम्बितवाममुद्रितपदां श्रीरेणुकामाश्रये ।। ४

क्लीं नमो भगवति रक्तपञ्चमि तत्परम् ।
रेणुका देवि संप्रोक्त्वा दहयुग्मपचद्वयम् ।। ५

अखिलेति जनं मेति वशंकुरु पदं तथा ।
वह्नेर्जाया तथा क्लीं च मन्त्रोद्धारो वरानने ।। ६

अयुतं तु पुरश्चर्या होमं(मे)पञ्चप्रसूनकम् ।
एवं कृत्वा पुन(र)श्चर्यां पश्चात्काम्यानि साधयेत् ।। ७

षट्त्रिंशत्कोष्टके यन्त्रे रेणुकामन्त्रमुत्तमम् ।
लिखित्वा क्लीं त्वा(तु)शूलाग्रे साध्यनामादिसंयुतम् ।। ८

घृतेलि(ले)ख्यमिदं यन्त्रं जप्त्वा मन्त्रसहस्रकम् ।
पिबेद्वन्ध्या सुपुत्रार्थी(र्थे) पुत्रिणी भवति ध्रुवम् ।। ९

वटाग्रनिम्बबीजं च स्तन्येन पयसा पिबेत् ।
गर्भं प्रसूयते(?) वन्ध्या देवकोपाच्च मुञ्चति ।। १०

अश्वत्थमूलं संगृह्य वंदकां ग(गो)पयोयुतम् ।
पिबेत्तदुभयं वापि प्रशस्तं गर्भधारणे ।। ११

पिष्ट्वा शिरीषपुष्पाग्रैः(ग्रं)पयोघृतसमन्वितम् ।
ऋतुस्नातां(ता)पिबेद्बन्ध्यां(या) लभते गर्भमुत्तमम् ।। १२

सहदेवी श्रिया युक्तं पिष्ट्वा साग्रसमन्वितम् ।
पिबेत्क्षीरेण नारीणां गर्भलाभा(भो)यशस्यते ।। १३

मत्स्याक्षीं चूर्ण इ (यि) त्वा तु घृतेन सह दापयेत् ।
मण्डलात् गर्भिणी भूयात् वन्ध्या नात्र विचारणा ।। १४

बीजं पातालपनसफलाद्गृह्य विचक्षणः ।
क्षीरगोघृतपिष्टं तत् पाययेद्गर्भिणी भवेत् ।। १५

श्वेताच्युतफलं मूलं भस्मीकृत्य विचक्षणः ।
गोधृते पाययेद्वन्ध्या गर्भिणी भवति ध्रुवम् ।। १६

सप्तपर्ववचा(चां)पिष्ट्वा दापयेत् क्रि(कृ)मिनाशने ।
संपिष्ट्वा वज्रवल्लीं च नवनीतेन दापयेत् ।। १७

क्रि(कृ)मि(:)पतति देवेशि द्विदिनादायतेक्षणे । १८

मुस्तेलग्नि विलंगयष्टिमधुरामंजिष्ठपाठावचा-
शुण्ठीरोहिणिकाफलत्रयवृषामृद्वीक दार्वीयुतम् ।
गव्येषु प्रतिसाधितं घृतमिदं कीर्तिप्रदं पावनं
पुत्रापुश्य(पुत्रीपुत्र) करं महाग्रहहरं भूतामयघ्नं परम् ।। १९

सर्वत्र रेणुकामन्त्रं प्रयुञ्जीयात् शुचिस्मिते ।
एतन्मन्त्रस्य माहात्म्यं को वा जानाति पण्डितः ।। २०

निम्बस्य पदकां गृह्य गुलिकां कारयेद् दृढम् ।
रेणुकामन्त्रितं क्षुद्ररोगान्मुक्त्यै तु बन्धयेत् ।। २१

पैशाचभ्रमणीमूलं रक्तापामार्गमूलकम् ।
एतद्द्वन्द्वकया सार्धं बध्नीयाद्गृ(ग्र)ह मुक्तये ।। २२

तद्गन्धाघ्राणमात्रेण ब्रह्मरक्षोगणादयः ।
पलायन्ते महाभीताः न समर्थाश्च हिंसितुम् ।। २३

नानाक्षुद्राणि नश्यन्ति धारकस्य तु दर्शनात् ।। २४

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
चतुष्षष्टितमोऽध्यायः ।।



## ।। पञ्चषष्टितमोऽध्यायः ।।

ततोऽम्बिके महादुर्गां वदामि श्रद्धया शृणु ।
अग्निदुर्गा महादुर्गा जलदुर्गेति नामतः ।। १

वनदुर्गा ततः पश्चात् शू(मू)लदुर्गाथ शूलिनी ।
त्रा(ता)सां तु शूलिनी देवि महाक्रूरेति कीर्तिता ।। २

अथातः संप्रवक्ष्यामि शूलिनीं तु विशेषतः ।
समाहितेन मनसा शृणु सर्वं वरानने ।। ३

ब्रह्मा तु शूलिनीदुर्गामन्त्रस्य ऋषिरुच्यते ।
गायत्री छन्द इत्युक्तं देवता शूलिनीश्वरी ।। ४

ह्रींकारं बीजमित्युक्तं स्वाहाशक्तिः ततः परम् ।
स्वेच्छाप्रयोगसिध्यर्थे विनियोगो वरानने ।। ५

ह्रामित्यादिकरन्यासं षडङ्गं तु त व(था)प्रिये ।
लक्ष्मीबीजं समुच्चार्य दुं शूलिनि तत्परम् ।। ६

श्रीं च शूलिनि संप्रोक्त्वा सिद्धप्रोक्त्वा सुरेति च ।
पूजिते नन्दिनि युग्मं ल(र)क्षयुग्मं महापदम् ।। ७

योगेश्वरीति हुंफट् च हृदिन्यासं समाचरेत् ।
वरदेति शिरश्चोक्तं शेषं सर्वं च पूर्ववत् ।। ८

युद्धप्रियेति देवेशि शिखायां विन्यसेत्क्रमात् ।
विन्ध्यवासिनि मां प्रोक्त्वा त्रायस्वेति पदं वदेत् ।। ९

कवचं न्यस्य देवेशि महासुरपदं वदेत् ।
मर्दिनीति पदं प्रोक्त्वा नेत्रन्यासं समाचरेत् ।। १०

सर्वसिद्धिपदं प्रोक्त्वा इत्यस्त्रं (च) समाचरेत् ।। ११

बिभ्राणाशूलबाणान्न(स्य) भयवरगदा चापपाशांकुशाग्रैः
(चापपाशान् कराब्जैः)
मेघश्यामा किरीटोल्लसितशशिकला भीषणा...(भूषणा)ढ्य
सिह्मस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता
कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसिनी शूलिनी नः ।। १

नमः प्रणवपूर्वजे नतजनस्य चिन्तामणे
ज्वल ज्वल तु शूलिनि त्वमिह पाहि चास्मान् सदा ।
समस्त रिपुदुष्ट(च)ग्रह(च)हुंफडित्यक्षरैः
शिखिस्त्र्य थ मनोहरे जन न(नि) तुभ्यमव्याहते ।। १३

वश्याकर्षणविद्वेषस्तम्भनोच्चाटनिग्रहम् ।
अन्यच्चापि प्रयोगाणां(?) स्मरणोदेव सिध्यति ।। १४

यत्रैहिकफलं न स्यात् तत्रस्यात्पारलौकिकम् ।
न यत्र परं लोकं तत्रैहिरफलं भवेत् ।। १५

मन्त्रिणां तु द्विजादीनां रहस्यं तु युगे युगे ।
लशुनी देवतायां तु भोगं मोक्षं च विन्दति (?) ।। १६

तत्राणिमादि सिद्धिः स्यात् चतुःषष्टिकला अपि ।
जपतर्पणहोमादौ साङ्गो भूमौ कृतो यदा (?) ।। १७

मातृकोष्ठे श्मशाने वा प्रोक्तदेशे मनोरमे ।
जपे(त्)षोडशसाहस्रं विधिपूर्वं जितेन्द्रियः ।। १८

दशांशं तर्पयेत्पश्चात् शतांशं होमयेत्ततः ।
शुक्रवारे तथा शौम्ये(सोमे)सौम्यहोमं समाचरेत् ।। १९

कुश(शुक्र)वारे तथाष्टम्यां क्रूरहोमं विशेषतः ।
युद्धे शत्रुजये चैव रोगोत्पाते च संकटे ।। २०

तदा जप्य महादुर्गां सर्वकार्याणि साधयेत् ।
महादुर्गाप्रसादेन सर्वत्र लभते जयम् ।। २१

विशेषात्पुत्रकामस्तु सद्यः पुत्रफलं लभेत् ।। २२

मध्ये शक्तिं वसुदललसच्छूलिनीवर्णयुग्मं
किञ्जल्कोद्यन्महिषमथिनी मन्त्रवर्णं(र्णान्)बहिश्च ।
तु(तृ)ष्टुप् दुर्गा लिपिपरिवृतं भूपुरांश्च(रस्या) न्तराले
दुर्गाबीजं त्वभिपरिवृतं शूलिनी यन्त्रमेतत् ।। २३

अथातः संप्रवक्ष्यामि क्रियाभेदं वरानने ।
अभक्तानामगम्यं तु भक्तानां सुलभोत्तमम् ।। २४

पूर्वं तु वृत्तं रु(ऋ)तुकोण लक्ष्मीकोणेषु मायामथतारसाध्यम् ।
आराध्य यन्त्रं प्रजपेत्सहस्रं आकर्षणं स्यात्तु चराचराणाम् ।।

यक्षगन्धर्वसिद्धादीन् देवान् देवस्त्रियस्तथा ।
आकर्षति महाभूतां(न्)किमु भूलोकवासिनः ।। २६

आकर्षयन्त्रं वक्ष्यामि क्षिप्रमाकर्षसिद्धये (द्विदम्)
तारं नमो भगवति रुद्रकालपदं ततः ।। २७

कूटकाली(लि)कालकूट मोहिनी ऐं चक्लीं च ह्रीं ।
इष्टकाम्येति मोक्षेति प्रदायिनि पदं ततः ।। २८

सकल ज्ञापिनि प्रोक्त्वा संक्रामिणि पदं ततः ।
ब्राह्मी माहेश्वरी प्रोक्त्वा कौमारी वैष्णवी तथा ।। २९

वाराहीपदमुच्चार्य माहेन्द्रीति पदं वदेत् ।
चामुण्डी वटुक प्रोक्त्वा भैरव्याकर्षय द्वयम् ।। ३०

देवदत्तमिति प्रोक्त्वा प्रवेशय पदं ततः ।
के(खे)लयेति पदं प्रोक्त्वा भाषयेति पदं ततः ।। ३१

श्रीं क्लीं ऐं हन युग्मं च सप्त प्रोक्त्वा च मातृके ।
हुं फट् स्वाहान्तको मन्त्रः क्षिप्रमाकर्षणप्रदः ।। ३२

क्लीं कारं वृत्तमध्ये तदनु वसुदले शक्तिलक्ष्मीं लिखित्वा
बाह्ये भूकोणयुग्मे दिशि दिशि मदनं तद्बहिस्तारसाध्यम् ।
लोहे ताम्रे तु पूज्य प्रयतनरवरस्तत्सहस्रं जपित्वा
खन्याद्यन्त्रं घरण्यां मधुकमलयुतं होमकं कर्म कुर्यात् ।।

ततस्त्वादाय तद्भस्म तस्मिन् यन्त्रं विलिख्य तु ।
संपूज्य विधिवद्देवीं सहस्रं प्रजपेत्ततः ।। ३४

तद्भस्म रोचनागन्धकुङ्कुमेन ललाटके ।
तिलकं मन्त्रवित् कुर्यात् सर्वलोकवशीकरम् ।। ३५

तारं नमो भगवति क्षां द्वयं रेफवेदकम् ।
हुं रं वटुकायपदं एहि युग्मं च संहर ।। ३६

संहरेति महाकाली(लि)पतिमानस तत्परम् ।
गृह(ह्ण) युग्मं पचद्वन्द्वं सर्वस्त्रीपुरुषेति च ।। ३७

वशंकरिपदं सर्व(ा)लोकेति भुवनेश्वरी(रि) ।
तद्वशं भ्रमय प्रोक्त्वा मद्वशं तत्परं वदेत् ।। ३८

आनय स्वाहया युक्तो वशीकर(ण)सिद्धिदः ।। ३९

त्रिकोण कोणेष्वथ वह्निबीजं
बाह्ये तु वृत्तं परितो धरण्याः ।
कोणेषु धात्रीमभितो लकारं
साध्यावृत्तं स्तम्भनयन्त्रमेतत् ।। ४०

लोहे तु ताम्रे तु निषार्दफलं(निशार्धकाले)
संलिख्य यन्त्रं परिपूज्य जप्त्वा ।
सहस्रवारं तु जपेन्मनी शि(षी)
खने(त्)क्षपायां रिपुदिङ्मुखः सन् ।। ४१

सभाकूटे रिपोर्गेहे द्वारतोरणमन्दिरे ।
मातृस्थानेऽथवा प्राच्यां दिशि ज्येष्ठागृहेऽथवा ।। ४२

जिह्वास्तम्भं हनुस्तम्भं क(ा)रयेल्लिङ्गगुह्ययोः ।
चक्षोश्च(?)श्रवणस्तम्भः सर्वलोकेष्वथ प्रिये ।। ४३

सबिन्दुकं पावकदीर्घबीजं
बाह्ये सलग्नाक्षरराजकोष्ठम् ।

प्रत्येकरेखात्रिशिखं ससाध्यं
विशेषणं(जः)क्षोभकरं तदेतत् ।। ४४

एतत्समाराध्य जपेत्सहस्त्रं
कृत्वा निषा(शा)यां रिपुको(?)स्मशाने ।
पुनर्जपेदेवमथो द्विषन्त-
श्चान्योन्ययुद्धाद्गगनं प्रयान्ति ।। ४५

दशाहमेवं प्रजपेद्रिपूणां
लक्षं क्षयाय प्रलयाय मन्त्री ।
ततस्तथा शत्रुकुलोद्भवानां
भवेद्यमाख्या नगरी प्रपन्ना ।। ४६

पञ्चाश्रमालिख्य तदग्रशूलं
मध्ये तु वृत्तं पवनं च कोणे ।
मायाषडर्णत्रिशिखाग्रसाध्यं
तारं त तो(दु)च्चाटनयन्त्रमेतत् ।। ४७

संपूज्य यन्त्रं विधिवत्सहस्त्रं
खनेत् श्मशाने रिपुकेतु कोष्टके (रिपुकोष्ठके तु)
शत्रुः संबंधो(सबन्धुः) सगणः सवर्गः
प्रयाति यास्यं(म्यं) प(पु)रमाशु गेहात् ।। ४८

भवेद्विनाशं रिपुमध्यगानां
भूतादिचेष्टा बहवो भवन्ति।
स्वप्नार्भटीक्रूरगणो(द्)भवानां
पाषाणभीषापद(त)नं च पश्चात् ।। ४९

त्रिकोणं विलिखेत्पूर्वं पञ्चकोणं ततः परम् ।
वसुकोणं ततः पश्चात् ऋतुकोणं बहिस्तथा ।। ५०

भूकोणत्रितयं बाह्ये लिखेद्यन्त्रं महोज्ज्वलम् ।
तारसाध्यं रिपूणां त((द्व)बहिबी(र्बी)जेन योजयेत् ।। ५१

पञ्चारेषु लकारान्तं विलिखेत्साध्यमारुतम् ।
बहिरष्टसु कोणेषु साध्यं चिन्तामणिं लिखेत् ।। ५२

ततः षट्कोणकोणे तु झंटीत्सं(शं) साध्य संयुतम् ।
चतुष्कोणे देवदत्तं मारयेति पृथक् पृथक् ।। ५३

लोहे संलिख्य तत्कृष्णपुष्पैरभ्यर्च्य पूजयेत् ।
अष्टोत्तरसहस्रं तु स्पृष्ट्वा जप्त्वा जितेन्द्रियः ।। ५४

पूर्वमारभ्य पूर्वान्ते(?)दिशायां दक्षिणादिशि ।
दक्षिणा(भि)मुखो मन्त्री खनित्वा बलिपूर्वकम् ।। ५५

तत्पक्षाद्रिपवः सर्वे प्रयान्त्यव्याजमारणम् ।
अथवा साध्यवृक्षस्य समिन्मधुघृतैर्युतम् ।। ५६

तिलसर्षपसंयुक्तं कुर्याद्धोमं यथाविधि ।
कृष्णवर्णे(र्णां)ज्वलत्केशी(शीं)
शूलहस्तां कपालिनीम् ।। ५७

खड्गचर्मधरां बाणान्(ण)धनुर्हस्तां महाभुजाम् ।
बह्निज्वालामयीं दुर्गां संभाव्य शरभाः स्वयं(शरभाङ्कगाम्)।।

मन्त्रान्ते साध्यमारोप्य मारयेति पृथक् शिवे(जपेत्) ।
सप्ताहान्मा(मरणं)यान्ति शत्रवो नात्रसंशयः ।। ५९

स्वर्गभूतलदेवतामर्त्यकाः ..........(शिवे)
शूलिनीदर्शनादेव मरणं यान्ति(अ) हेतुकम् ।। ६०

एतदेव महागुह्यं स्मरणात्पापनाशनम् ।
जपतः सर्वसिद्धिःस्यात् भूयो भूयो युगे युगे ।। ६१

त्रिपञ्चकोणेषु विलिख्य शूलिनीं-
ससाध्यनामाङ्कितबीजमध्यगम् ।
रेखाशिरः कल्पितशूलयुक्तं
यन्त्रं महाभूतपिशाचहारि ।। ६२

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये पञ्चषष्टितमोऽध्यायः ।।



## ।। षट्षष्टितमोऽध्यायः ।।

भद्रकृत्यामनोर्देवि अङ्गिरा ऋषिरुच्यते ।
छन्दो गायत्रमेव स्यात् भद्रकृत्या तु देवता ।। १

क्षं बीजं ह्रीं ततः शक्तिः फट्कीलकमीरि(मितीरि)तम् ।
खट् फट् जहि हृदिन्यस्य महाकृत्येतिमूर्ध्नि च ।। २

विधूमाग्निसम प्रोक्त्वा शिखायां तु प्रभे न्यसेत् ।
देवि देवि महादेवि कवचं न्यस्य तत्परम् ।। ३

मम शत्रुनिवि(त्रूनिति) प्रोक्त्वा विनाशय तु नेत्रके ।
नमो नमश्च अस्त्रं स्यात् ततो ध्यायेन्महेश्वरीम् ।। ४

कृष्णवर्णां बहूरू(बृहद्रू)पां रक्तकुंचितमूर्धजाम् ।
शिरःकपालमालां च विकेशीं घूर्णिताननाम् ।। ५

दृष्ट्वा(दंष्ट्रा)करालवदनां नेत्रभ्रू(वक्रभ्रू)कुटिलेक्षणाम् ।
रक्तनेत्रामतिक्रुद्धां लम्बजिह्वामधोमुखीम् ।। ६

ऊर्ध्वदक्षिणहस्तेन बिभ्रतीं च परस्वधां(श्वथम्) ।
अघोदक्षिणहस्तेन बिभ्राणां खड्गमूर्धगां(जम्) ।। ७

ततोर्ध्वं(र्ध्व)वामहस्तेन धारयन्तीं तथाङ्कुशम् ।
(अधोवामकरेणैव बिभ्राणां शूलमूर्ध्वजम्) ।। ८

एवं ध्यात्वा महाकृत्यां जपेत्पूजां समाल(र)भेत्) ।
क्षं भक्षेति पदं प्रोक्त्वा ज्वालाजिह्वे ततः परम् ।। ९

करालदंष्ट्रे तत्पश्चात् य(त)था प्रत्यङ्गिरे वदेत् ।
क्षं ह्रीं हुं फट् च मन्त्रः स्याद्विंशद्वर्णोऽर्थसिद्धिदः ।। १०

पुन(र)श्चर्यार्णसाहस्रं शान्तिपूर्वं समाचरेत् ।
त्रयोर्मे(ततो यो मे)ति संप्रोक्त्वा पुरस्तादिति तत्परम्।।११
(पुरस्तादागतः परम्)

पाप्मा च पाव(प)केनेह कर्मणा इति संवदेत् ।
(इन्द्रस्तं देवराजा तु प्रोक्त्वा जम्भयतूच्चरेत् ।। १२

जृम्भयत्विति संप्रोक्त्वा स्तम्भयत्विति संवदेत् ।)
नाशयत्विति तत्पश्चात् मोहयत्विति संवदेत् ।। १३

शोषयत्विति संप्रोक्त्वा साधयत्विति तत्परम् ।
(ऽऽयासयत्विति तत्परम्)
श्वा(ध्वं) सयत्विति संप्रोक्त्वा भ्रामयत्विति संवदेत् ।। १४

क्लेद(श)यत्विति तत्पश्चात् स्थापयत्विति तत्परम् ।
तापयत्विति तत्(च) प्रोक्त्वा मारयत्विति तत्परम् ।। १५

कलिं तस्मै पदं प्रोक्त्वा प्रयच्छत्विति संवदेत् ।
कृतं मम शिव(वं) प्रोक्त्वा ममप्रोक्त्वा शुभं मम ।। १६

शान्तिस्वस्त्ययनं प्रोक्त्वा ममतारं नमः परम् ।
विष्णु प्रोक्त्वा गणेभ्यश्च सर्वशान्तिकरेभ्यः ।। १७

च(इन्द्रा)न्द्रायेति च राजानमिन्द्राय नम इत्यपि ।
इन्द्रस्थाने त (य)थेन्द्राय नम इत्यादिषु क्रमात् ।। १८

अग्न्यादिदिक्पतीन् योज्य बन्धयेत्सर्वतो दृढम् ।
भक्ता(ल्ला)तकरसैर्युक्तैरर्कको(का)ष्ठैर्हुनेद्यदि ।। १९

शत्रवस्तत्क्षणेदेव प्रयान्ति यमसादनम् ।
परकृत्याहरं देवि स्वकृत्या बलवर्धनम् ।। २०

सर्वक्षुद्रहरं शत्रोः सर्वक्षुद्रकरं परम् ।
भूतप्रेतपिशाचादिशिलावज्रं विशेषतः ।। २१

नान्यदेतत्समानं स्यात् परकृत्याप्रशान्तये ।
विंशत्कोष्ठे लिखेद्यन्त्रं रेखाग्रे शूलमालिकेत् ।। २२

शूलाग्रेषु लिखेच्छक्तिं क्षं भक्षेति समन्वितम् ।
बहिरष्टदले पद्मे दशयुग्मे च षोडशे ।। २३

भूपुरेषु लिखेत्कृत्यां सूक्ष्मं सूक्ष्मविदम्बिके ।
मालामन्त्रेण संवेष्ट्य प्रणवेनावाह्य यन्त्रवित् ।। २४

संधारयेत् महायन्त्रं सर्वरक्षाकरं भवेत् ।
कृत्याकोटिशतैर्वापि यन्त्रधृक् न च बाध्यते ।। २५

या प्रेषि(रि)ता परैः कृत्या तस्य तच्छत्रुघतिनी ।
सूक्तं पृथक् प्रवक्ष्यामि येन कृत्याविमोचनम् ।। २६

वर्गाणां नवकं सूक्तं कृत्यासूक्तमितीरितम् ।
वर्गे प्रथमसंज्ञे तु प्रथमाया ऋचः प्रियै ।। २७

अङ्गिरा ऋषिराख्यातश्छन्दोऽनुष्टुप् प्रकीर्तितम् ।
उग्रकृत्या देवता स्यात् *तांबीजं शक्तिमृच्छतु ।। २८

---

* तां बीजम् ऋच्छतु शक्तिः ।

न्यासं पूर्वोक्तमेव स्यात् ध्यानं पूर्ववदाचरेत् ।
मूलमन्त्रं प्रवक्ष्यामि समाहितमनाः शृणु ।। २९

यां कल्पयन्ति संप्रोक्त्वा नोऽरयेति पदं वदेत् ।
क्रूरां कृत्यामिति प्रोक्त्वा वधूमिव पदं ततः ।। ३०

तां ब्रह्मणापनिन्हुघ्नः (निर्णुद्मः) प्रत्यक्कर्तारमृच्छथु ।
अयुतं प्रजपेन्मन्त्रं ततःसिद्धो भवेन्मनुः ।। ३१

कृष्णाष्टमीं समारभ्य तत्पर्वान्तं महेश्वरि ।
औदुम्बरस्य दण्डं तु(पुं) मात्रं मानमीरितम् ।। ३२

तं स्पृष्ट्वा प्रजपेन्मन्त्रं अष्टोत्तर शतं सुधीः ।
म्रीयते(म्रियन्ते) रिपवः सर्वे पक्षादेव महेश्वरि ।। ३३

ऊर्ध्वं तदेव सादृक्षो(?) कर्तुं ब्रह्मापि न क्षमः ।
द्वात्रिंशत्कोट(ष्ठ)के यन्त्रे मूलमन्त्रं विलिख्य तु ।। ३४

शूलाग्रे विलिखेत्साध्यं तद्बाह्येऽष्टदलं लिखेत् ।
प्रत्यङ्गिरे महाकृत्ये दलेष्वालिख्य तत्परम् ।। ३५

केसरेषु स्वरान् लिख्य कादित्या(सा)न्तं कलादले ।
भूपुरद्वन्द्वसंयुक्तं रेखायां गरुडाकृतिम् ।। ३६

लिख्य प्राणान् प्रतिष्ठाप्याधारे क्षुद्राहि भक्षकम् ।
कृत्ये क्षुद्रादिसर्पाणां भक्षकं यन्त्रमुज्ज्वलम् ।। ३७

भूरेखाग्रे लिखेत्सर्पं शत्रुमुद्दिश्य योजयेत् ।
सर्प आगत्य ते शत्रुं द्रुतं दंशयते ध्रुवम् ।। ३८

निवृत्तये तु गरुडं भूरेरवाये(यां) विलिख्य तु ।
तं सर्पे(सर्पं) भक्षये त्युक्त्वा योगं कुर्यान्निवृत्तये ।। ३९

एतद्यन्त्रं महादेवि त्रिरात्रं प्रजपेद्यदि ।
नाशयंति(नाशं याति) महेशानि शत्रुकृत्या तु तत्क्षणम्।।४०

द्वितीयायाश्च ऋष्यादि पूर्ववत्परमेश्वरि ।
शीर्षण्वतीं कर्णवतीं विल्लु(षु) रूपां भयङ्करीम् ।। ४१

यः प्राहिणोदिहाद्यत्वा वितं त्वं योजयासुभिः ।
एतन्मन्त्रं महादेवि सर्वशत्रुविनाशनम् ।। ४२

विभीतकस्य दण्डे (ण्डं)तु अष्टा(ष्ट) प्रादेशमात्रकम् ।
धृत्वा निशि महादेवि विकत्रृष्णे प्रतिपादितः ।। ४३
(कृष्ण प्रतिपदादितः) ।

तच्चतुर्दि(र्द)शिपर्यन्तं जपेद्रोगी भवेद्रिषुः ।
म्रियते च न सन्देहो यदि न क्रियते कृपा ।। ४४

सहस्ताद्वादशा(द्वादशाहात् पुरा) कृत्या
प्रयोक्तारं प्रणाशयेत् ।
सा कृत्या तं समागत्य नाशयेत्य(द) चिराच्छिवे ।। ४५

त्रिकोणं पञ्चकोणं च साष्टारं च कलादलम् ।
भूपुरद्वयसंयुक्तं यंत्रं कृत्याविनाशने ।। ४६

एतेषु विलिखेन्मन्त्रं भूपुरे मातृकामपि ।
रेखाग्रे विलिखेदाखून् प्रयोगे सदने रिपोः ।। ४७

खनित्वा प्रजपेन्मन्त्रं मृत्युग्रस्तो भवेद्रिपुः ।
निवृत्तये तु मार्जारं लिखित्वा प्रजपेद्यदि ।। ४८

कृत्याऽऽखुं भक्षयत्याशु यन्त्रं मार्जारसंज्ञकम् ।
वामदेवो ऋषिर्देवि तृतीया(या)ऋचः परे ।। ४९

छन्दो गायत्रमाख्यातं कृत्या प्रोक्ता तु देवता ।
आद्यन्तौ बीजशक्ती च न्यासादि पूर्ववद्भवेत् ।। ५०

ए(ये)न दिष्टेह वहसि प्रितिकूलमधायिनी ।
तमेव(वे)तो निवर्तस्वमास्मान् रि(मृच्छो अनागसः।।

पूर्ववत्तु पुरश्चार्या सहसा(स्र)द्द्वादशा(द्वि)रिपुः ।
केवलं जपमात्रेण ज्वरग्रस्तो भवेद्रिपुः ।। ५२

भल्लातकरसाभ्यक्तः(क्तैः)म(अ)र्ककारस्करैः सुधीः ।
अष्टोत्तरशताच्छत्रा(त्रोः) सप्तरात्रा(त्) कुलक्षयं (यः) ।।५३

षट्कोणं वसुकोणं च चतुर्दशदलं ततः ।
चतुर्दलं ततः पश्चाद्भूपुराद्यं लिखेद्बुधः ।। ५४

तेषु मूलं समालिख्य भूपुरे वह्निमेव च ।
लिखित्वा प्रेषयेच्छत्रुमुद्दिश्य परमेश्वरि ।। ५५

तद्वह्निना महादेवि शत्रुग्र(ग्र)स्तोऽभितप्यति ।
भूपुरे वारुणं बीजं अमृतेशं विलिख्य तु ।। ५६

तज्ज्वरं स(श)मयेदाशु विवृत्त्यं(निवृत्तिः) नान्यथा भवेत् ।
चतुर्थाया वृद्धि विष्टुः (वृद्ध विष्णुः) ऋषिः प्रोक्तस्तु सुव्रते।।

छन्दोऽनुष्टुप् च कालाग्निरुद्रो देवस्तु देवता ।
आद्यन्तं बीजशक्ति स्यात् षडङ्गं पूर्ववद्भवेत् ।। ५८

अभिवर्तस्व कर्तारं विरस्तास्माभिरोजसा ।
आयुध(र)स्य निकृन्तस्य (स्व)प्रजां च पुरुषादिनि ।। ५९

कृष्णाष्टमी(मीं)समारभ्य तत्पर्वान्तं जपेद्यदि ।
ऊर्ध्वं तद्दिवसाद्रक्षा ब्रह्मणापि न शक्यते ।। ६०

सहस्रात् द्वादशा(त्)शत्रोः भार्या नाशं समश्नुते ।
कोष्ठे षोडशके मन्त्रं शूलाग्रेषु लिखेत्क्रमात् ।। ६१

तद्बाह्ये शूलमालिख्य तन्मध्ये यममालिखेत् ।
ततः संप्रेषयेच्चक्रं शत्रोर्गेहे महेश्वरि ।। ६२

रिपवः क्षणमात्रेण यमग्रस्ताच्च(श्च)तत्क्षणात् ।
यमांतकं महादेवं शान्तिं (यमान्तकमहादेवशान्तिं)
कुर्यात्कृपा यदि ।। ६३

पञ्चमस्य महादेवि यातुधान ऋषिर्मतः ।
अनुष्टुप्छन्द मि(न्दइ)त्युक्तं उग्रकृत्या तु देवता ।। ६४

या(य)स्त्वा कृत्ये चकारेह च चं(तं त्वं)गच्छ पुनर्भ(र्न)वे ।
अरातीः कृत्येति संप्रोक्त्वा नाशयेति पदं वदेत् ।। ६५

सवसर्वाश्चयातु धान्यश्च प्रोक्त्वा मन्त्रं समुच्चरेत् ।
शिवालये तालपत्रं शत्रुनाम्ना च संलिखेत् ।। ६६

जप्त्वा प्रादेशमात्रं तु खानित्वा शत्रुगेहके ।
रिपवो मासमात्रेण भक्षं(?) यान्ति न संशयः ।। ६७

बिन्दुत्रिपञ्चषट्कोण वसुकोणवसोर्दलैः ।
भूपुरत्रयसंयुक्तं तेषु मन्त्रं यथाक्रमम् ।। ६८

भूपुरे मातृकां लिख्य रेखाग्रे गजमालिखेत् ।
शत्रुगेहे खनेद्विद्वान् पुनः स्नात्वा जपेन्मनुम् ।। ६९

न(स)शत्रुर्गजवर्येण भक्ष(क्ष्य)ते मासमात्रतः ।
तं निमि(तन्निवृ)त्तौ लिखेत्सिह्मं गज(जो)नाशं समश्नुते।।७०

सिंहारा(र्या)ख्यक्रियायां तु जपेत्पञ्चास्त्रसंपुटम् ।
प्रथमां प्रथमास्त्रेण द्वितीयादिक्रमाद्भवेत् ।। ७१

ब्रह्मास्त्रं ब्रह्मदण्डं च तथा ब्रह्मशिरःपरम् ।
वायव्यं च महापाशुपतं पञ्च प्रकीर्तितम् ।। ७२

याद् चो प्रःनयोयोधिहिमधीस्यवदे वदेत् ।
वदेच्च र्गोभ तुम्यणिरेर्व तु विसत्त स्वः पदं भुवः ।।७३

भूरों हन युगं हुं फट् मन्त्रं ब्रह्मास्त्र संज्ञितम् ।
दों वसासेजररोपत्यादचो प्रःनयो पदम् ।। ७४

योधि हिम च धीस्यवदे र्गोभ उक्त्वा तु यं णिरे ।
र्वतुविसच तत् प्रोक्त्वा मन्त्रः पाशुपतः स्मृतः ।। ७५

प्रचोदयान्नो यो धियो धीमहि देव संवदेंत्[1] ।
स्यभर्गोपदमुच्चार्य तु विस ब्रह्मदण्डकम् ।। ७६

धी(धि)यो यो नः प्र संप्रोक्त्वा चोदयादिति संवदेत् ।
भर्गो देवस्य धि(धी) प्रोक्त्वा महीतत्सवितुर्वदेत् ।। ७७

---

1. गायत्रीगतपदानां विलोमतः कथनं ब्रह्मदण्डं नाम अस्त्रविशेषः इति ज्ञायते । परं तु उत्तरार्धं श्लोकस्य शोधनार्हं दृश्यते ।।

वरेण्यं संवदेद् ब्रह्माण्यस्त्रं ब्रह्मशिरःस्मृतम् ।
स्व(स्वः)पदं च भुवः भु(र्भू)रोमावायव्याययावदेत् ।। ७८

*वायव्यो वीययावा(?) स्वभुवः पदमुच्चरेत् ।
भूरो(रों)हन युगं हुं फट् वायव्यास्त्रं प्रकीर्तितम् ।। ७९

पञ्चास्त्रस्पुटंमार्गं शत्रून् प्रति जपेद्यदि ।
तत्क्षणान्नाशमायाति वह्निना तूलराशिवत् ।। ८०

ब्रह्मास्त्रादिप्रयोगे तु जगद्भस्म प्रजायते ।
किमुत शत्रुनाशे तु वक्तव्यं वीरवन्दिते ।। ८१

विंशत्कोष्ठे लिखेन्मूलं तद्बाह्ये दलपञ्चकम् ।
दलेषु विलिखेद्वर्गं पञ्चास्त्रेण पुटीकृतम् ।। ८२

बाह्ये तु सदने साध्यं चक्रं त्रैलोक्यनाशनम् ।
कृते प्रयोगे देवेशि निवृत्तिर्नैव विद्यते ।। ८३

अनेनैव निवृत्तिः स्यादस्त्रेण वरवर्णिनि ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
षट्षष्टितमोऽध्यायः ।।



* वायव्यमस्त्रमपि अशुद्धमेवोपलब्धम् शोधनार्हं च ।

## ।। सप्तषष्टितमोऽध्यायः ।।

षष्ठस्य वामदेवस्तु ऋषिः षङ्क्तिर्महेश्वरि ।
छन्दो देवि महादेवो देवोदेवः(देवता) परिकीर्तिता ।। १

क्षिप्रंकृत्ये निवृ(व)र्तस्व कर्तुरेष(व)गृहान् प्रति ।
पशूंश्चैवास्य नाशय वीरास्यश्च निवर्हतः ।। २
(वीरांश्चास्य निबर्हय)

एतन्मन्त्र(स्व)स्य देवेशि पुरश्चर्यायुतं भवेत् ।
श्मशाने भस्म सङ्गृह्य नद्यां पाषाणमेव च ।। ३

अष्टोत्तरसहस्त्रं तु प्रजपेच्छत्रुदिङ्मुखः ।
ज्वरग्रस्तो भवेच्छत्रुरेकरात्रान्न संशयः ।। ४

भुञ्जानश्चैव गोक्षीरं नित्यमष्टोत्तरं शतम् ।
त्रिरात्रं जपमात्रेण ब्रह्मतुल्यो भविष्यति ।। ५

दधिमधुघृताभ्यक्तं(क्त)पलाशसमिधं बुधः ।
अष्टोत्तरशतात् ब्रह्म वर्चस्वी दशवारतः ।। ६

बिन्दुत्रिकोणमष्टारं दशयुग्ममतः परम् ।
भूपुरद्वन्द्वकं मन्त्रं लिखे त्ये(दे)षु यथाक्रमम् ।। ७

रेखाग्रे नारसिह्मं तु लिखित्वा चक्रमुत्त....(मम्)
(रेखाग्रे नारसिह्मं तु लिखित्वा चक्रमुज्ज्वलम् )
प्रेषयेच्छत्रुगेहे तु ततः शत्रोमतिर्भवेत्(शत्रोर्मृतिर्भवेत्) ।। ८

रेखाग्रे शरभं लिख्य तन्निवृत्तौ सहस्रकं(कम्) ।।
जप्त्वा तं धारयेत् क्षिप्रं मृत्युमुक्तो भवेद्रिपुः ।। ९

सप्तमाया ऋचो जेवि अगस्त्यो ऋषिरीरितः ।
छन्दोऽनुष्टुप् महादेवि महाकृत्या तु देवाता ।। १०

यस्त्वा कृत्ये प्रजिघाय विद्वान् अविदुषो गृहान् ।
तस्यैवेतः परेत्याशु तनुं कृधि परुष्परुः ।। ११

एतन्मन्त्रेण पालाशसमिधं दधिमिश्रितम् ।
मधुसर्पिस(स्स)मायुक्तं जुहुयात्सर्वसिद्धये ।। १२

पक्षमात्रं जपेन्मन्त्रं शत्रुकृत्या विनश्यति ।
बिन्दुत्रिकोण कोष्टारं(?) दशकोणानि तत्परम् ।। १३

दशत्रिशूलसंयुक्तं स(म)हीपुरमतः परम् ।
एतेषु विलिखेन्मन्त्रंरेखाग्रे आसुरीं लिखेत् ।। १४

शत्रुगेहे श्मशाने वा मातृकोष्ठे खनेतरं(खनेत्ततः) ।
स्नात्वा सहस्रं संजप्यात् सप्तरात्रं दृढव्रतः ।। १५

आसुर्या नाशमायान्ति रिपवस्तेऽपि (तत्क्षणात्) ।
तत्स्थाने विलिखेदिन्द्रं धारयेत्सुखमाप्नुयात् ।। १६

वसिष्ठस्त्वष्टम (ऋचः)ऋषिश्छन्दस्त्वनुष्टुप् ।
देवता रुद्र आख्यातो दोषशानि(न्त्यै) नियोगकम् ।। १७

प्रतीचीं त्वां पायसे तु ब्रह्मरोचिष्वमित्रहा ।
(प्रतीचीं त्वापसेधतु ब्रह्मरोचिष्वमित्रहाः)
अग्निश्च कृत्ये रक्षोहा रिप्रहाचाज एकपान् (?) १८
(अग्निश्च कृत्ये रक्षोहा रिपुहा चाज एकपात्)

शमीसमिद्भिर्जुहुयात् पयसा सप्तरात्रकम् ।
सर्वदोषान्(सर्वे दोषा)विनश्यन्ति अष्टोत्तरसहस्रतः ।। १९

त्रिकोणं वसुकोणं च दश मन्वश्रसंयुतम् ।
महीपुरसमायुक्तं मन्त्रं तेषु लिखेत्क्रमात् ।। २०

राक्षसां(सीं)च लिखेदग्रे गृहीतं रक्षसा रिपुम् ।
खनित्वा पूर्ववद्देवि साध्यरक्षे समाहितः ।। २१

........(स्नात्वा)पुनर्जपेन्मन्त्रं अष्टोत्तरसहस्रकम् ।
रक्षसा सङ्गृहीतः स्थु(स्तु) रिपुर्नाशं समश्नुते ।। २२

हनुमन्तं लिखेदग्रे धारयेत्तन्निवृत्तये ।
नवमस्य (माया)ऋषिस्त्वत्रिः छन्दो गायत्रमीरितम् ।। २३

ब्रह्मा तु देवता प्रोक्तो योगः कृत्यानिवृत्तये ।
यथा त्वाङ्गिरसा(सः) पूर्वे भृगवश्चापसेधिरे ।। २४

अत्रयश्च वसिष्ठाश्च तथैव त्वापसेधिम ।
केवलं जपमात्रेण शत्रुकृत्याविनाशनम् ।। २५

देवालये श्मशाने वा भद्रकाल्यालयेऽपि वा ।
अष्टोत्तरसहस्रं तु त्वर्ककाष्ठै र्हुनेद्यदि ।। २६

ज्वरग्रस्तो भवेच्छत्रुः सप्तरात्रान्न संशयः ।
अनेन घृतमामन्त्र्य मा(प्रा)शयेद्यदि पुत्रिकाम् ।। २७

सा वन्ध्या गर्भिणी भूयात् नात्रकार्या विचारणा ।
वृत्त(त्ता)कारेत्वष्टकोष्टमष्टशूल(लं)बहिर्भवेत् ।। २८

तद्बाह्येऽष्टदलं पद्मं भूपुरेण विमिश्रितम् ।
पद्मान्तरे लिखेन्मन्त्रं बाह्ये साध्यं विलिख्य तु ।। २९

शृगालं विलिखेदग्रे शत्रुमुद्दिश्य सुन्दरि ।
प्राप्नुवन्ति महारोगं दशाहाद्रिपवस्तथा ।। ३०

श्वानं च भैरवं देवं लिखित्वा धारयेद्यदि ।
शमनं याति तद्रोग(गः) विभूत्यादि प्रयोगतः ।। ३१

दशमास्य(माया)ऋषिस्त्वग्निर्जगतीछन्द उच्यते ।
अग्निष्ट(स्तु)देवता प्रोक्त्वा योगः पूर्ववदीरितः ।। ३२

यस्त्वे(स्ते) परूंषि सन्दधौ रथस्वेव विभुर्धिया ।
तं गछतत्रतेऽनमज्ञानःस्तत्वये जनः(?) ।।
(तं गच्छ तत्र तेऽयमज्ञातस्ते अयं जनः) ३३

विष्ल्वा(विष्णवा) लये इदंमन्त्रमष्टोत्तरशतं जपेत् ।
इष्टसिद्धिभवेद्देवी(वि) नित्यं नित्यं समाहितः ।। ३४

पद्मं षोडशमालिख्य बाह्ये शूलानि संलिखेत् ।
दले मूलं समालिख्य ज्येष्ठां मूलेषु संलिखेत् ।। ३५

पूर्ववत्तु खनेच्छत्रोरैश्वर्यं नाशमश्नुते ।
लक्ष्मीमग्रे लिखेद्यन्त्रं(न्त्र)धारणाच्छ्रियमश्नुते ।। ३६

पञ्चास्त्रसंपुटं यन्त्रं पूर्ववत्तु महेश्वरि ।
तस्मिन् द्वितीयवर्गस्य योगं(?)सिध्यति सुन्दरी(रि) ।। ३७

नान्यमन्त्रैर्निवृत्तिः स्यात् प्रयोग(प्रयोगे)सुकृतेऽम्बिके ।। ३८

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
सप्तषष्टितमोऽध्यायः ।।



## ।। अष्टषष्टितमोऽध्यायः ।।

एकादशऋच(चो)देवी(वि)भृग्वर्चस ऋषिःस्मृतः ।
छन्दोऽनुष्टुप् महाकृत्वा(या)देवता परिकीर्तिता ।। १

यो नः कृत्ये ऋणस्छोवा कच्चिद्वान्योभि हींसति ।
(योनः कृत्ये रणस्थोवा कश्चिद्वान्योऽभि हिंसति ।)
तस्य त्वंद्रोरिवेद्धोऽग्निः तनोन्मृजस्व हेलिता ।
(ऽग्निस्तनूं ऋच्छस्व हेळिता ।) २

अष्टोत्तरशतं जप्त्वा त्रिदिनं साधकोत्तमः ।
नाशयेत्सर्वकृत्याश्च अपमृत्युमपि क्षणात् ।। ३

कृष्णप्रतिपदारभ्य जपेत्पञ्चदशं(?)दिनम् ।
शत्रवो मरणं यान्ति शत्रुकृत्या च नश्यति ।। ४

अर्कवारे(र उ)पोषितःसन् जपेदष्टसहस्रकम् ।
स्वप्ने नश्यति(पश्यति स)आदित्यं वरं दास्यति स प्रभुः।।

अश्वत्थसमिधं (धा)कृत्वा स्वर्णं विन्दति साधकः ।
अष्टकोणं लिखेदग्रे शूलयुग्मं च तद्बहिः ।। ६

त्रिकोणं विलिखेद्बाह्ये तेषु मन्त्रं यथाक्रमात् ।
विपत्यं(?) लेखयेदग्रे संहरेच्छत्रुमात्मनः ।। ७

विषमाश्रित्यतच्छत्रुः मरणं यात्यहेतुकम् ।
अमृतेशीं तन्निवृत्तौ योगं कुर्याज्जलेन तु ।। ८

अगस्त्यो द्वादशऋचः ऋषिश्छन्दस्त्वनुष्टुप् ।
देवता तु महाकृत्या पूर्ववन्न्यासमीश्वरी(रि) ।। ९

भवाशर्वा देवहेळिमस्यत पापकृत्वने ।
हरस्वती त्वं च कृत्ये मोच्छिषस्तस्य किञ्चन ।। १०

पूर्वपक्ष(प्रतिपदमारभ्य भुवनेश्वरी(रि) ।
*तद्दिनान्त(न्ते)रिपोर्देवि व्याधिजालं भविष्यति ।। ११

द्वात्रिंशत्कोष्ठकेवृत्ते मन्त्रमुल्लिख्य मन्त्रवित् ।
बाह्यशूले साध्यनाम पर्वतं च लिखेत् बुधः ।। १२

पर्वतेनावृतः शत्रुः पक्षमात्राद्विनश्यति ।
तछांतायै(तच्छान्त्यैच) महावज्रमुल्लिख्य परमेश्वरी(रि) १३

धारयेद्यदि तच्छांति(तच्छान्तिः) भवेन्नाने(न्ये)न सुन्दरि ।
त्रयादश ऋचोदेवी(वि) महादेवो(वः)ऋषिर्मतः ।। १४

उष्णिछन्दस्तु गायत्री देवता परिकीर्तिता ।
एनोशिवासः पंथानः परा यांति परा च तं ।।
(ये नः शिवासः पन्थानः परा यन्ति परावतम् ।) १५

तैर्देवी रात्रियाकृत्ये नागमाय ततः परं ।
(तैर्देवि रात्र्याः कृत्या नो गमयस्वानुकृत्तये)
स्वानुकृत्य संप्रोक्त्वा पुरश्चर्या च पूर्ववत् ।। १६

---

* अत्र श्लोकार्धं वक्तव्यं नोक्तं अथवा न लिखितं भवेत् ।

पूर्वपक्षप्रतिपदारभ्यांत च (?) तद्दिनात् ।
अष्टोत्तरशतं सर्वे दोषा नश्यन्ति सुन्दरि ।। १७

शत्रवो मरणं यान्ति स्वस्य वृद्धिर्भवेदिह ।। १८

बिन्दित्रिकोणं च तथा(त्वथ) पञ्चकोणं
त्वष्टच्छदं षोडशपत्रयुक्तम् ।
महीपुरेणावृतमम्बुजाक्षि
लिखेन्मनुं वारणमग्रतोऽपि ।। १९

याम्यां पुरीं याति रिपुः प्रयोगात्
स्यात्तन्निवृत्तौ(त्ती)रघुनाथबीजात् ।। २०

चतर्दश ऋचो(?)देवि ऋषिः प्रत्यङ्गिराः स्मृताः(तः)
छन्दोऽनुष्टुब्महादेवि उग्रकृत्या तु देवता ।। २१

योनः कश्चि इहाराति मनसात्यभिदासति ।
(येनः कश्चिद्द्रुहारातिः मनसाह्यभिदासति) (प्रतिभूषति)
दूरस्थोवाऽन्तिकस्थो वा तस्य हृद्यमसृक् पिब ।। २२

जपेदष्टसहस्रं तु रिपुमुद्दिश्य सुन्दरि ।
उत्पातयति दोषाणि शत्रुः शत्रोश्च जा ..... ।। २३(?)

रेखाष्षड्डूर्ध्वामु (उ) ल्लिख्य तिर्यक्दशकमीश्वरि ।
अष्टकोष्ठं पृथक् दिक्षु जायते परमेश्वरि ।। २४

तेषु मन्त्रं लिखेद्विद्वान् अग्रेवृषभमालिखेत् ।
पूर्ववत्तु प्रयोगाणि(?) कुर्याच्छत्रुक्षयाय वै ।। २५

स्वप्ने वृषभ मा (आ) गत्य) शत्रुं नाशयते(?)ध्रुवम् ।
निवृत्तिस्तु तदुद्धाराद् व्याघ्रलेखनतोऽपि च ।। २६

नान्यमन्त्रैः नि(र्नि)वृत्तिःस्याद्विना तल्लेखनादिकम् ।
गौतमो ऋषिराख्यातः पञ्चदश्या ऋचः परम् ।। २७

छन्दोऽनुष्टुप् महाकृत्या देवतापरिकीर्तिता ।
ए(ये)नासि कृत्ये प्रहिता (दूढयेना)स्मज्जिघांसया।।२८

तस्य व्यानच्चाव्यानच्च हिनस्तु हरसाशनिः ।
अष्टोत्तरशता(तं) नित्यं कृष्णप्रतिपदादितः ।। २९

जपेत्तद्दिवसान्तं वै(?) ग्रहदोषा(न्) विनाशयेत् ।
अभिचारादिशान्तिः स्यात् जीवेद्वर्षशतं नरः ।। ३०

षट्कोणषड्दलं त्वष्टपत्रं द्वादशपद्मकम् ।
क्ष्माकोणद्वयसंयुक्तं लिखेन्मन्त्रं यथाक्रमम् ।। ३१

अनिशं(अशनिं) विलिखेदग्रे प्रयोगं साध्यवृक्षके ।
अशन्या सङ्ग्रहं सर्वं स्थावरं जङ्गमं तु वा ।। ३२

नाशमायाति देवेशि मासमात्रान्न संशयः ।
गोवर्धनधरं कृष्णं विलिखेत्तन्निवृत्तये ।। ३३

पञ्चास्त्रसंपुटे(टं)पूर्वयन्त्रमेव महेश्वरि ।
फलं तृतीयवर्गस्य सिद्धिर्भवति संपुटात् ।। ३४

**।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये अष्टषष्टितमोऽध्यायः ।।**

## ।। एकोसप्ततितमोऽध्यायः ।।

अङ्गिरा षोडशऋचो(चः)ऋषिश्छन्दो महेश्वरि ।
गायत्री देवि कालाग्निरुद्रः प्रोक्तस्तु देवता ।। १

यद्युद्वैषि द्विपघ्नस्मान्यदि वैषि चतुष्पदी ।
निरस्तोतोरजास्माभिः कर्तुरश्टापदी गृहीन् ।
(यद्युपैषि (यदिवैषि) द्विपद्यस्मान् यदिवैषि चतुष्पदि ।
निरस्तेतो व्रजास्माभिः कर्तुरष्टापदी गृहान् ।) २

समुद्रगामिनीं गत्वा नदीमष्टोत्तरं शतम् ।
जपेत् कृष्णप्रतिपदमारभ्य दश पञ्च च ।। ३

दिनं पश्चाज्जलं नित्यं अष्टाविंशतिवारकम् ।
रिपुगेहे क्षिपेन्मन्त्री सप्ताहान्म्रियते रिपुः ।। ४

भूपुरद्वयमालिख्य तत्र द्वात्रिंशदीरितम् ।
तेषु क्रमाल्लिखेन्मन्त्रं शूलाग्रे साध्यनाम च ।। ५

तदग्रे महिषं लिख्य मारयेति पृथक् पृथक् ।
अष्टोत्तरसहस्रं तु खनित्वा जपमाचरेत् ।। ६

रिपवः क्षणमात्रेण प्रयान्ति यमसादनम् ।
दुर्गां लिखेत्वा(खित्वा) तत्पूर्वं धारणाच्छान्तिमश्नुते ।। ७

ऋचः सप्तदशाख्याया ज्वरो नाम ऋषिः स्मृतः ।
छन्दोऽनुष्टुप् महामृत्युर्देवता परिकीर्तिता ।। ८

यो नः शपादशपतो यश्च नः शपतः शपात् ।
वृक्षमिव विद्युदाशु तमामूलादनुशोषय ।। ९

मृत्युं स्मृत्वा जपेन्मन्त्रं नित्यमष्टोत्तरं शतम्
शत्रवो मरणं यान्ति द्विमासान्नसंशयः ।। १०

ऊर्ध्वमुखां(कां) लिखेद्रेखांतिर्यगेकां तथालिखेत् ।
पृथक् पृथक् चतुः शूलं तेषुमूलं समालिखेत् ।। ११

रेखाग्रे रौद्रमस्त्रं च योज्य शत्रुं प्रति क्षिपेत् ।
रिपवो मरणं यान्ति रौद्रास्त्रेण सुपीडिताः ।। १२

सुदर्शनास्त्रसन्धानात्सुखमाप्नोति मानवः ।
ऋचोऽष्टदश्या देवेशि कपिलो ऋषिरुच्यते ।। १३

छन्दोऽनुष्टुप् तथा ब्रह्मा देवता परिकीर्तिता ।
यं द्विष्मो यश्चनद्वेष्टयसायुश्च नहः शपात् ।। १४

शुने पैष्टमिवक्षांतं तंप्रत्यस्व समीत्यवे ।
(यं द्विष्मो यश्चनो द्वेष्ट्यघायुर्यश्चनः शपतः शपात् ।
शुने पिष्टमिव क्षामं तं प्रत्यस्य स्वमृत्यवे ।)
शुक्लप्रतिपदारभ्य तद्दिनान्तं महेश्वरि ।। १५

अष्टोत्तरशतं नित्यं जपेच्छत्रुक्षयाय वै ।
क्षयकासादिरोगेन(ण)पीडितोम्री(म्रि)यते रिपुः ।। १६

दण्डका(ण्डाका)रांलिखेद्रेखां तत्र शूलं च षोडश ।
तेषुमूलं लिखेन्मन्त्री शूलाग्रे साध्यनाम च ।।१७

ब्रह्मदण्डं लिखित्वा तु प्रयुञ्जीयाद्रिपुं प्रति ।
दशाहादयुतं कुर्यारि(द्रि)पवः क्षयमाप्नुयुः ।। १८

तच्छान्तये महाशान्तिमहापाशुपतं लिखेत् ।
प्रयोगाच्छान्तिमाप्नोति नान्यथा जायते सुखम् ।। १९

एकोनविंशति ऋचः ऋषिर्ब्रह्मा समीरितः ।
छन्दोऽनुष्टुप् महादेवि देवता भैरवो मतः ।। २०

यश्च सापत्नशपथो यश्च जामीशपातिनः ।
ब्रह्मा च यत्क्रुद्धशापात् सर्वां तत्कृत्यधःस्पदां ।
(यश्च सापत्नः शपथो यश्च यामी शपाति नः ।
ब्रह्मा च यत्क्रुद्धः शापात् सर्वां तत्कृत्यधः स्पदां ।
(यश्च सापत्नः शपथो यश्च यामी शपाति नः ।
ब्रह्मा च यत्क्रुद्धः शपात् सर्वं तत्कृध्ययधस्पदम् ) ।। २१

अष्टोत्तरशतं अर्कसमिधं तैलमिश्रितम् ।
शत्रुपुत्रकलत्रादि नश्यते नात्रसंशयः ।। २२

ऊर्ध्वं लिखेद्वेदरेखां तथा तिर्यस्(क्)समालिखेत् ।
शूलान्तर्विलिखेन्मन्त्रं नवकोष्ठेषु नाम च ।। २३

वायुमग्रे समालिख्य शत्रुमुद्दिश्य योजयेत् ।
वायुना शोषितः शत्रुर्मरणं यात्यहेतुकम् ।। २४

अग्रे चंदं(चेन्द्रं)समालिख्य धारयेत्सुखमाप्नुयात् ।
अथ विंशद्‌ऋचो देवि काश्यपः ऋषिरीरितः ।। २५

छन्दोऽनुष्टुप् महादेवि देवता तु बृहस्पतिः ।
सबन्धुश्चाप्यबन्धुश्च योऽस्मान् यद्यपि दारतति ।। २६

तस्य त्वं भिन्ध्यधिष्ठाय पदा विस्फूर्य तच्छिरः ।
(सबन्धुश्चासबन्धुश्च यो यद्यभिदासति ।
तस्य त्वं भिन्ध्यधिष्ठाय पदा विस्फूर्य तच्छिरः)
नक्तभोजी हविष्याशी अयुतं प्रजपेद्यपि(दि) ।। २७

शत्रूणां व्यवहारेषु जयं विन्दति साधकः ।
अष्टकोणं लिखेदादौ कोणे वेदाक्षरं भवेत् ।। २८

कोणाग्रे शूलके साध्यं तदग्रे वायसं लिखेत् ।
पूर्वोक्ते तत्खनेद्देवि तच्छत्रुर्मृतिमश्नुते ।। २९

उलूकलेखनाच्छान्तिः भवेद्रात्रौ प्रयोगतः ।।
पञ्चास्त्रसंपुटं कुर्या सर्ववर्गफलं भवेत् ।। ३०

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
एकोनसप्ततितमोऽध्यायः ।।



## ।। सप्ततितमोऽध्यायः ।।

पञ्चमे देवि वक्ष्यामि वर्गे योगं तु तच्छृणु ।
प्रथमाया ऋचो देवि अथन्मन्यु(अपान्तमन्यु)ऋषिःस्मृतः ।। १

छन्दो बृहतिराख्याता रुद्रः कालाग्नि सं ज्ञि(ज्ञ)कः ।
देवता स्यान्महादेवि बीजशक्त्यादि पूर्ववत् ।। २

अभिप्रेहि सहस्राक्षं युक्त्वा तु(शु) शपथं रथे ।
शत्रूनन्विच्छन्ती कृत्येवृकीवाविमतो गृहान् ।। ३

कृष्णाष्टमी(म्)समारभ्य तत्पक्षान्तं ऋचं जपेत् ।
शिवलिङ्गं च संस्पृष्ट्वा नित्यमष्टोत्तरं शतम् ।। ४

अभिचारं शमं याति कुष्ठरोगो भवेद्रिपोः ।
लिखेदष्टदलं पद्मं तद्बाह्ये वसुकोणकम् ।। ५

शूलानि विलिखेदग्रे क्रमान्मूलं समालिखेत् ।
शूलाग्रे विलिखेत्साध्यं चोरबीजेन संयुतम् ।। ६

चोरैस्तु नश्यते शत्रोर्धनं प्राणादिकं क्षणात् ।
रक्ष(रक्षा)स्यात् कार्तवीर्येण यन्त्रेण सुखमश्नुते ।। ७

सत्वा(त्य)तपाः ऋषिस्त्रिष्टुप्छन्दः तु देवता ।
द्वाविंशति ऋचो देवि एतत्सर्वमुदाहृतम् ।। ८

परिणो वृग्धि शपथादहन्नग्निरिवाहृदम् ।
(परिणो वृङ्धि शपथान् दहन्नग्निरिव ह्रदम् ।)
शत्रूनेवाभिनो जहि दिव्या वृक्षमिवाशनिः ।। ९

कृष्णाष्टमीं समारभ्य तद्दिनान्तं महेश्वरि ।
जानुमात्रं(त्रे)जले स्थित्वा सन्ध्यायां सप्तवासरम् ।। १०

अष्टाविंशतिवारं तु शत्रुमुद्दिश्य संक्षिपेत् ।
मृतो भवति सप्ताहात् यद्दिनं(दिने) क्रियते कृपा ।। ११

अयुतं प्रजपेन्मन्त्रं शत्रोः कुष्ठंभविष्यति ।
त्रिकोणं विलिखेत्पूर्वं तन्मध्ये बिन्दुमालिखेत् ।। १२

षट्कोणं विलिखेद्बाह्ये भूबिम्बं मूलमन्त्रतः ।
अष्टाक्षरं च वह्नयन्तं शिष्टं षट्कोणके लिखेत् ।। १३

भूपुरे साध्यमालिख्य नागास्त्रं योजयेदरेः ।
नागास्त्रेणावृतः शत्रुः सप्ताहान्म्रियते ध्रुवम् ।। १४

गरुडास्त्रेण शान्तिःस्यात् नान्यथा देवि जायते ।
ऋषिस्त्वग्निस्तृतीयाया त्रिष्टुप् छन्द उदाहृतम् ।। १५

कृत्या तु देवता प्रोक्ता कामनाशे नियोगकम् ।
शत्रून्मे मोपशपथात् (शत्रून्मे पोथ शपथात्)
कृत्याश्च सुहृदोऽसुहृत् ।। १६

जिह्माः श्लक्ष्णाश्च दुर्हृदः
समिद्धं जातवेदसम् ।
सर्वकाम(मो)रिपोर्देवि जपान्नाशं समश्नुते ।। १७

अथ ऊर्ध्वं लिखेदर्धचन्द्रं पार्श्वे तु शूलकम् ।
चतुर्दलं तु तद्बाह्ये तेषु शूलं समालिखेत् ।। १८

शूले शौर्यं(सूर्यं सौरं वा) समालिख्य
प्रयुञ्जीयाच्च मन्त्रवित् ।
तत्तेजसाभिसन्तप्तो रिपुर्नाशं समश्नुते ।। १९

सुधाकरेण शान्तिः स्यात् नान्यथा वि(स)फलं भवेत् ।
गालकोऽऋषिराख्यातः गायत्रीछन्द उच्यते ।। २०

हयग्रीवो महाविष्णुर्देवता परिकीर्तितः ।
असपत्नं पुरस्तान्नः शिवं दक्षिणतः कृधि ।। २१

अभयं सततं पश्चात् भद्रमुत्तरतो गृहे ।
ध्यात्वाचौदुम्बरं वह्नौ अष्टोत्तरशतं हुनेत् ।। २२

मसूरिकाभिः सप्ताहान्म्रियते पूर्ववत्क्रिया ।
ऋषिस्तु पञ्चमऋचः काश्यपः सुरवन्दिते ।। २३

छन्दोऽनुष्टुप् महेशानि देवता च बृहस्पतिः ।
परेहि कृत्ये मा तिष्ठ विद्धस्येव पदं नय ।। २४

[1]मृगस्य हि मृगारिप्रो न त्वा नी कर्तुमर्हति
दक्षिणाभिमुखो भूत्वा नित्यमष्टोत्तरं शतम् ।। २५

शिवालये जपेद्विद्वान् दिनादूर्ध्वं रिपोस्तदा ।
पुत्रमित्रादयः सर्वे नाशं यान्ति न संशयः ।। २६

---

1. मृगारिः प्रणत्वानि ...... इति ग्रन्थान्तस्थः पाठः ।।

लिखेत्पञ्चदलं पद्मं पद्मे शूलत्रयं भवेत् ।
लिखेत्पत्रेषु शूलेषु शूलाग्रे साध(ध्य)नाम च ।। २७

वेतालं विलिखेदग्रे रिपुर्मासाद्विनश्यति ।
नारसिह्मं(ह्मात्)निवृत्तिःस्यान्नान्यथा शान्तिमाप्नुयात् ।। २८

पञ्चास्त्रसंपुटे देवि फलं वर्गस्य सिद्ध्यति ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
सप्ततितमोऽध्यायः ।।



## ।। एकसप्ततितमोऽध्यायः ।।

वर्गेषष्ठे ऋचः शर्वः प्रथमायां (या) महेश्वरि ।
छन्दोऽनुष्टुप् देवतास्यः(याः) शर्वो योगस्तु निग्रहे ।। १

अभ्यक्ता त्ता स्वलंकृता सर्वं नो दुरितं दह ।
जानीथाश्चैव कृत्यानां कर्तॄन् नॄन् पापचेतसः ।। २

नित्यमष्टोत्तरशता(त)जपमात्रेण शत्रवः ।
क्षयं यान्ति न सन्देहो(हः)कृत्ये(त्या)शान्तिर्भविष्यति ।। ३

लोकवश्यं भवेत्क्षिप्रं व्याधिशान्त्यभिषेचनात् (?)।
सोमग्रहणवेलायां कापिलं नवनीतकम् ।। ४

आकृती(तिं) च सरस्वत्या(:)कृत्वा जप्त्वा सहस्रकम् ।
प्राच(श)येन्नवनीतं तत् श्रुतधारो भवेद् ध्रुवम् ।। ५

गन्धर्वाप्सरसां प्रीतिं पञ्चाहाल्लभते वशी ।
त्रिकोणे बिन्दुमालिख्य शूलमग्रे लिखेत्त्रयम् (?) ।। ६

तत्रसाध्यं समालिख्य त्रिकोणे मूलमन्त्रकम् ।
श्मशाने तु क्षपामध्ये बलिपूर्वं खनेत्ततः ।। ७

पुनः स्नात्वा जपेन्मन्त्रं सहस्रं शत्रुदिङ्मुखः ।
सप्तहा(न्)म्रियते शत्रुरुद्धारात्सुखमश्नुते ।। ८

वरुण्(णस्)तु द्वितीयाया ऋषिश्छन्दस्त्वनुष्टुप् ।
सूर्यस्तु देवता प्रोक्ता योग(:)शत्रोश्च मृत्यवे ।। ९

यथा हन्ति पुरासीनं तथैवेष्वा सुकृन्नरः ।
तथा त्वया युज वयं निकृण्म स्थाणुजङ्गमम् ।। १०

रुद्रालये जपेन्नित्यमष्टोत्तरशतं सुधीः ।
व्याधिना गृह्यते शत्रुर्म्रियते वा न संशयः ।। ११

त्रिकोणे(णो)परि पञ्चाश्रं पञ्चशूलं तदग्रके ।
तत्र शूलं समालिख्य विषवृक्षे महेश्वरि ।। १२

मातृकोष्ठे खनेद्यन्त्रं क्षयरोगो भवेद्रिपोः ।
तद्यन्त्रोद्धारणाच्छत्रुः सहसा सुखमश्नुते ।। १३

तृतीयाया ऋषिस्त्विन्द्रः त्रिष्टुप्छन्द उदाहृतम् ।
कृत्या तु देवता प्रोक्ता रोग(योगः)स्यानि(न्नि)ग्रहे रिपोः ।।

उत्तिष्ठैव परेहीतोऽज्ञाते किमिहेच्छसि ।
ग्रीवास्ते कृत्ये पादौ चाभि कर्त्स्न्यामि विद्रव ।। १५

सहस्रमष्ट प्रजपेत् मृत्युग्रस्तो भवेद्रिपुः ।
यन्त्रं पूर्वोक्तमेव स्यात् प्रयोगं च(गश्च)तथाम्बिके ।। १६

इन्द्रो ऋषिश्चतुर्थाया(स्)त्रिष्टुप्छन्द उदाहृतम् ।
मित्रस्तु देवता प्रोक्तो योगः शत्रोश्च निग्रहे ।। १७

स्वायसाः सन्ति नोऽयसो विद्म चैव परूंषि ते ।
तैस्ते निकृण्मस्तान्युग्रे यदि नो जीवयस्वरीन् ।। १८

कृष्णपक्षप्रतिपदमारभ्य भुवनेश्वरी(रि) ।
अमावास्यान्तमीशानि अष्टाविशति सङ्ख्यया ।। १९

महादेवालये स्थित्वा दक्षिणामूर्तिमव्ययम् ।
स्पृष्ट्वान(ना)म रिपोःस्मृत्वा जपेत्प्रत्यहसा(मा)दृतः ।। २०

एकादशाहा....(त्तत्)शत्रुम्री(त्रुर्म्रि)यते नात्रचिन्तनम् ।
भक्ताशी प्रजपेन्मन्त्रं सप्ताहं विजितेन्द्रियः ।। २१

ज्वरग्रस्तो भवे(च्छ)छत्रुर्यदि र(न)क्रियते कृपा ।
द्वात्रिंशत्कोष्टके यन्त्रे रेखाशूलाग्रसाध्यके ।। २२

मध्ये मूलं तु शूलाग्रे साध्यनाम लिखेद्बुधः ।
क्षि(क्ष)पामध्ये रिपोर्गेहे क्षिप्त्वा जप्त्वा सहस्रकम् ।। २३

महारोगं समाप्नोति दशाहाच्छत्रुपुङ्गवः ।
मूलेनैव निवृत्तिः स्यान्नान्यथा विपु(सफ)लं भवेत् ।। २४

अङ्गिगरा(:)पञ्चमऋचः ऋषिश्छन्दस्त्वनुष्टुप् ।
ईश्वरो देवता प्रोक्ता योगः सर्वार्थसिद्धये ।। २५

मास्योच्छिषो द्विपदं मोत किंचिच्चतुष्पदम् ।
मा ज्ञातीननुजान् पूर्वान् मा वेशि प्रतिवेशिनौ ।। २६

सूर्योपरागे मन्त्रं तु सहस्रं प्रजपेद्यदि ।
ईश्वरः च(श्च)क्षुषा व(प)श्येत्सर्वमिष्टं प्रयच्छति ।। २७

त्रिंशत्कोष्ठे लिखेन्मन्त्रं शूलाग्रे साध्यमालिखेत् ।
तद्बाह्ये भूपुरद्वन्द्वं यन्त्रं विगृ(ग्र)हमोचकम् ।। २८

पुत्रपौत्रप्रदं दिव्यं धारणात्सर्वसिद्धिदम् ।
पञ्चास्त्रसंपुटं कुर्यात् संहाराय महेश्वरि ।। २९

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाखये
एकसप्ततितमोऽध्यायः ।।



## ।। द्विसप्ततितमोऽध्यायः ।।

ऋषिः सप्तमवर्गस्य प्रथमाया महेश्वरि ।
ब्रह्मानुष्टुप् महेशानि छन्दो रुद्रस्तु देवता ।। १

शत्रूयता प्रहितासि दूढ्येनाभि यथा यतः ।
ततस्तथा त्वा नुदतु योऽयमन्तर्मयि श्रितः ।। २

तिलतण्डुलहोमेन श्रीवृद्धिर्मृत्युनाशनम् ।
पित्तशान्तिर्महेशानि जायते पूर्वयाऽचिरात् ।। ३

यन्त्रं पूर्वोक्तमेव स्यात् धारणान्मृत्युनाशनम् ।
[1]परमस्तु द्वितीया(या)ऋषिश्छन्दस्त्वनुष्टुप् ।। ४

वासवो देवता प्रोक्ता योगस्तेजोऽभिवृद्धये ।
एवं त्वं निकृतास्माभिर्ब्रह्माणा देवि सर्वशः ।। ५

यथेतमाश्रिता गत्वा पापधीनिव नो जहि।।
पलाशकुसुमैराज्यैः मध्वा(ध्व)क्तैस्तु सहस्रकं(म्) ।। ६

तेजोवान् साधि(ध)कः क्षिप्रं
इष्टसिद्धिं प्रजायते (समश्नुते)
त्रिंशत्कोष्ठं च भूकोणं धारणाद् गृ(ग्र)हमोचनम् ।। ७

1. द्वितीयर्चः परब्रह्मर्षिः इति वसवो देवता इति च प्रपञ्चसारसारसङ्ग्रहे।

तृतीयाया ऋषिस्त्वग्निः छन्दोऽनुष्टुप् प्रकीर्तितम् ।
रुद्रस्तु देवता प्रोक्ता योगः शत्रु(त्रो)श्च निग्रहे ।। ८

यथा विद्युद्धतो वृक्ष आमूलादनु शुष्यति ।
एवं स प्रति शुष्यतु यो मे पापं चिकीर्षति ।। ९

द्वात्रिंशत्कोष्ठकं यन्त्रं तद्बाह्ये वसुपत्रकम् ।
भूपुरेण समायुक्तं यन्त्रं व्याधिविनाशनम् ।। १०

विषशान्तिरनेनैव जायते परमेश्वरि ।
चतुर्थाया ऋषिस्त्वग्निः छन्दोऽनुष्टुप् प्रकीर्तितम् ।। ११

रुद्रस्तु देवता प्रोक्ता योगः पापनिवृत्तये ।
यथा प्रतिशुको भूत्वा तमेव प्रति धावति ।। १२

पापं तमेव धावतु यो मे पापं चिकीर्षति ।
पलाशकुसुमै र्याति(र्वापि)तत्समिद्भिः सहस्रकम् ।। १३

सर्व(र्वे) पापा(?)विनश्यन्ति तालपत्रं यथाऽनली(ले) ।
पूर्वोक्तमेव यन्त्रं स्यात् प्रयोगं च तथाविधम् ।। १४

पञ्चमस्य(म)हेशानि शातातप ऋषिःस्मृतः ।
छन्दोऽनुष्टुप् महेशानि परमात्मा नु (तु) देवता ।। १५

यो नः स्वो अरणो यश्च निष्ठयो जिघांसति ।
देवास्तं सर्वे धून्वन्तु ब्रह्म वर्म ममान्तरम् ।। १६

ब्रह्म वर्म ममान्तरं अव ब्रह्मद्विषो जहि ।
उत्वा मन्दन्तु स्तोमाः कृणुष्वराधो अद्रीवः ।
अव ब्रह्मद्विषो जहि ।। १७

एतामृचं जपेन्मन्त्री नित्यमष्टोत्तरं शतम् ।
ग्रहदोषा विनश्यन्ति कुम्भाद्वि(द्‌भिः) अभिषेचनात् ।। १८

अपामार्गैर्हुनेद्विद्वान् गोमूत्राक्तैः सहस्रकम् ।
क्षुद्रदोषा विनश्यन्ति तद्‌बाधा नैव जायते ।। १९

षट्सप्तकोष्ठके यन्त्रे बाह्ये भूपुरसंयुते ।
मूलं यथाक्रमं लिख्य धारयेद्‌ग्रहशान्तये ।। २०

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
द्विसप्ततितमोऽध्यायः ।।



## ।। त्रिसप्ततितमोऽध्यायः ।।

कुबेर तेति मन्त्रस्य ऋषिः कुत्साङ्गिराःस्मृतः ।
छन्दोऽनुष्टुप् महादेवि कालमृत्युस्तु देवता ।। १

कुबेर ते मुखं रौद्रं नन्दिन्नानन्दमावह ।
ज्वरमृत्युभयं घोरं विश नाशय मे ज्वरम् ।। २

एतामृचं जपेद्भस्म धारयेत्सर्वशान्तये ।
अष्टोत्तरशतं कुर्यात् तर्पणं ज्वरशान्तये ।। ३

द्वात्रिंशत्कोष्ठकं यन्त्रं ज्वरशान्ती(न्त्यै)महेश्वरि ।। ४

बृहतीतु महादेवो देवता ज्वरशान्तये ।
यो मे करोति प्रद्वारे योऽगारे(गृहे)यो निवेशने ।। ५

यो मे केशनखे कुर्यात् अञ्जने दन्तधावने ।
यन्त्रप्रयोगं सर्वं च कुबेर तेतिवत्स्मृतम् ।। ६

शिष्टानां चैव सर्वासां अङ्गिरा ऋषिरुच्यते ।
सर्वत्रानुष्टुभश्छंदांस्येतस्या अद्विनी(अश्विनी?)तथा ।। ७

शिष्टानां देवता कृत्या योगः शत्रोश्च निग्रहे ।
योनोदरे दारुगर्भे शयनं धीय शायिनम् ।। ८

पुरुषं निजह्नः कुम्भीपाकं नरक ......... ।
ग्रीवबंघोत्घतान्येवं पुरुषो सोयमस्य ह (?)
(ये नो दमे दारुधर्मे(गर्भे)शयानंधिया शयीतं(सहितं)पुरुषं निजह्नुः।
कुम्भीपाकं नरकं ग्रीवबद्धा(द्धं)हतान्येवं पुरुषासोमय(यमं)स्यह।।
(हता एवं पुरुषा सो यमस्य)

ये नो रयिं दुश्चरितासो अग्ने
जह्रुर्मर्तासो अनृतं वदन्तः।
तेषां वपूंष्यर्चिषा जातवेदः
शुष्कं न वृक्षमभि सं दहस्व।। १०

(यो नोरयिं दुश्चरितासो अग्ने जह्रन्मर्तासो अनृतं वदन्तः ।
तेषां वपूंष्यर्चिषा जातवेदः शुष्कं न वृक्षमभिसन्दहस्व ।। )
प्रतीसर प्रतिधाव कुमारीव पितुर्गृहान् ।।
मूर्धानमेषां स्फोटय पदमेषां कुले कृधि ।
(प्रतिसर प्रतिधाव कुमार्यव पितृगृहान् ।
मूर्धानमेषां स्फोटय पदमेषां कुले कृधि ।। ) ११

कृष्णवर्ण बृहत्कर्णिमहद्भयी ।
देवि देवि महादेवि मम शत्रून् विनाशय ।। १२

*(कृष्णवर्णि बृहद्रूपि बृहत्कण्ठि महद्भयि ।
देवि देवि महादेवि मम शत्रून् विनाशय ।
मम शत्रून् विनाशयों नमः ।। )

एता ऋचो जपेद्विद्वान् शत्रुमुद्दिश्य साधकः ।
शत्रवो नाशमायान्ति वह्निना तूलराशिवत् ।। १३

बिन्दुत्रिकोणं षट्कोणं वसुकोणं वसोर्दलम् ।
द्वादशं दलमालिख्य कलापत्रमतः परम् ।। १४

---

* कृष्णवर्णे बृहद्रूपे बृहत्कर्णे महद्भये ।
इति ग्रन्थान्तरे ऋग्वेदानुतारिणि ।।

द्वात्रिंशद्दलमालिख्य चतुष्षष्टदलं ततः ।
भूपुरद्वयसंयुक्तं तेषु यंत्रं(मन्त्रं) यथा क्रमम् । १५

एतद्यन्त्रं समालिख्य सीसे वा साध्यवृक्षके ।
विषवृक्षेऽथवा लेख्यं रिपोर्गेहे तु दक्षिणे ।। १६

खनित्वा तु पुनः स्नात्वा सहस्रं प्रजपेदृचः ।। १७

तद्दिनाद्रिपवः सर्वे प्रयान्ति यनसादनम् ।
अग्न्यासे धोररूपे विषरूपे विनाशिनि ।। १८

जृंभिता प्रतिगृह्वर्त स्वयमादरयाद्भुतम् ।
(अग्न्यास्ये घोररूपे विषरूपे विनाशनी ।)
जृम्भिता प्रतिगृह्णस्व स्वयमादाय अर्भकम् ।
त्वमिन्दो यमो वरुणः त्वपापोग्निरथानिलः ।। १९

ब्रह्मा विष्णुश्च रुद्रश्च तु(त्व)ष्टाचैव प्रजापतिः ।
अवाप्तध्वं निवर्तध्वं ऋतवः परिवत्सरम् ।। २०

अहोरात्राश्च देवाश्च त्वं दिशः प्रदिशश्च मे ।)
त्वमिन्द्रयमवरुणं(त्वमिन्द्रं यमं वरुणं)
सोममग्निं तथानिलम् ।। २१

अत्राहृत्य पशूंश्चैवाशूत्या(त्पा)दयस्वादय(दयस्वाद्भुतम्) ।
ये दृत्यरिवे मह्यं अग्नेकदा इधो दुर्मदा अग्मदासः ।। २२
(ये द्रुह्यान्नृजवे मह्यं अग्ने कदापि यो दुर्मदा अश्मदासः)

अविध्यैतान् शो(रो)चिषा विध्यतन्तून् -
वैवस्वतस्य सदने यमस्य ।
एतासामपि पूर्वोक्तयन्त्रं (न्त्र)योगं च पार्वति ।। २३

कृत्या सूक्तस्य सदृशो लोके नैवास्ति कश्चन ।
गोप्यानामपि गोप्यं च परकृत्याविनाशनम् ।। २४

सर्वे(र्व)क्षुद्रहरं श्रेष्ठं तव प्रीत्या मयोदितम् ।। २५

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये त्रिसप्ततिषष्टितमोऽध्यायः ।।



## ।। चतुःसप्ततितमोऽध्यायः ।।

वागीश्वर्या ऋषिः कण्व(वो) गायत्री छन्द उच्यते ।
वागीश्वरी महादेवी देवता परिकीर्तिता ।। १

बीजादि बालया न्यस्य षडङ्गं षट्पदैर्भवेत् ।
पुस्तकजपवटहस्ते वरदाभयचिह्नचारुबाहुलते ।। २

कर्पूरामलदेहे वागीश्वरी(रि) शोधयाशु मम चेतः ।
कुमारीं पूर्ववदु(पूर्वमु)च्चार्य वदयुग्मं त तत्परम् ।। ३

वाग्वादिनी(नि)पदं प्रोक्त्वा स्वाहान्तो मन्त्रमु(न्त्र उ)च्यते ।
षट्लक्षा(षल्लक्षै)श्च पुरश्चर्या सिद्धार्थैश्च हुनेच्छतैः ।। ४

सिद्धमन्त्री जपं कुर्यात् वागैश्वर्यप्रसिद्धये ।
सोमग्रहणवेलायां उपवासं चरन् वती (व्रती) ।। ५

कण्ठमात्रे जले स्थित्वा ऊर्ध्व बाहुरुदङ्मुखः ।
आमोच नीच(नान्तं) संजप्य तत्पश्चात्तर्पणादिकम् ।। ६

कृत्वा वागीश्वरीं स्मृत्वा वागैश्वर्यं समश्नुते ।
त्रिकोणमथ षट्कोणं द्वादशारं कलादलम् ।। ७

चतुर्विंशति पत्रं च द्वात्रिंशद्दलमालिखेत् ।
भूपुरद्वन्द्वयुक्तं यन्त्रं वाक्सिद्धिदायकम् ।। ८

नवनीत(ते)प्रलिख्ये(यै)तत् प्राशयेन्मण्डलं यदि ।
सार ...(स्व)त महासिद्धिमश्नुते साधकोत्तमः ।। ९

सरस्वतीसमो भूत्वा दिग्विदिग्विजयी भवेत् ।
तं दृष्ट्वा वादिनः सर्वे सर्वशास्त्रेषु पण्डिताः ।। १०

पलायन्ते महाभूता(भीत्या) सिह्मं दृष्ट्वा यथा गजाः ।
साधकः सर्वशास्त्रज्ञः परवादि(द)प्रभञ्जनः ।। ११

इह सिद्धिं समाश्रित्य देहान्ते श्रीपदं व्रजेत् ।
नकुल्यास्तु सरस्वत्या ऋषिः प्रोक्तो(:) कहोलकः ।। १२

छन्दोऽनुष्टुप् च नकुली देवता परिकीर्तिता ।
ऐं बीजं क्लीं ततः शक्तिः सौभगं कीलकं मतम् ।। १३

वाक्सिध्यर्थे नियोगस्तु षडङ्गं षट्पदैर्भवेत् ।
वो(ओ)ष्ठावि(पि)धाना नकुली
दन्तैः परिवृता पविः ।। १४

सर्वस्यै वाच ईशाना
चारुमामिह वादयेत् ।
षट्पदं देवि संप्रोक्तं तत्परं न्यासमाचरेत् । १५

पादमारभ्य जान्वन्तं प्रथमांशं न्यसेन्मनोः ।
जान्वादिनाभिपर्यन्तं दन्तैः परिवृता पविः ।। १६

सर्वस्यै वाचईशाना नाभ्यारभ्य हृदि न्यसेत् ।
वक्त्रे न्यसेन्महादेवि चारुमामिहवादयेत् ।। १७

यद्वाह्न(ग्व)दन्त्यविचेतरा(ना)नि
राष्ट्री देवानां निषंत्या(निषसाद) मंद्रा । १८

चतस्त्र ऊर्जं दुदुहे पयांसि
त्वस्ति(क्व स्वि) दस्याः परमं जगाम ।
नाभ्यात् हृदयंति(नाभ्या आ हृदयान्तं तु)
देवी(देवीं) वाचमिति न्यसेत् । १९

देवीं वाचमजयंत (मजनयन्त)देवा-
स्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषु(ष)मूर्जं दुहाना
धेनुर्वागस्मानुपसुष्टुतै तु ।। २०

ससर्परीति हृदयं (यात्)कण्ठान्तं विन्यसेद्बुधः ।
ससर्परी रंतिं(रमतिं) बाधमाना
बृहन्मिमाय जमदग्निदत्ता ।। २१

आ सूर्यस्य दुहिता ततान
श्रवो देवेष्वमृतमजुर्यम् ।
कण्ठमारभ्य वक्त्रान्तं ससर्परि(री)ति विन्यसेत् ।। २२

ससर्परीरभरत् तूयमेभ्योऽधि श्रवः
पाञ्चजन्यासु कृष्टिषु ।
सा पक्ष्यान् नव्यमायतुर्दधाना यां मे
पलस्ति जमदग्नयो ददुः ।। २३

सुविज्ञानं चिकितुषे जनाय
सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत् सत्यं यतरदृजीयस्तदित्
सोमोऽवति हन्त्यासत् ।। २४

चत्वारिवागी(गि)ति ऋचः (चा)
अधरोष्ठे तु विन्यसेत् ।। २५

चत्वारी(रि)वाक्परि मिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ।। २६

चतुः पदां समुद्धृत्य मूलमन्त्रस्य सुन्दरि ।
उत्तरोष्ठे न्यसेद्धीमान् दक्षिणे वाम पार्श्वके । २७

अधरोष्ठे तथा विद्वान् दक्षिणे वामपार्श्वके ।
न्यसेद्विन्दुं नमोऽन्तेन मूलवर्णं महेश्वरि ।। २८

द्वात्रिंशद्दशनेष्वेवं विन्यसेद्यन्त्रं तन्मध्ये नकुलीं स्मरेत् ।।
आलिख्य कर्णिकामध्ये तारं कोणेषु वट(षट्)स्वपि ।
अनुलोम(मां)विलोमां च बाला(लां)पत्रेषु चाष्टसु ।। ३०

यद्वावीति(यद्वागिति)ऋचः(द्व्यृ च) पादान्
क्रमेणाष्टो(ष्टौ) विलिख्य च ।
च त्त्वार्चर्व्या(चत्वार्यृचा) ससर्पर्या
ऋचा द्व्यृचा मातृकयापि च ।। ३१

आवेष्ट्य वाग्भवं बीजमालिखेद्भूपुरत्रये ।
ऋक्पञ्चकस्य वाग्देव्या यन्त्रं वाक्सिद्धिदायकम् ।। ३२

ध्यायेत्तत्कर्णिकामध्ये नकुलीं परमेश्वरीम् ।। ३३

मूलोद्यच्छारदेन्दुद्युति मुख कमले दन्तपत्रैः स्वजिह्वा
शोभावत्कर्णिकायामधिगतनकुलीं शुद्धवस्त्रां त्रिणेत्राम् ।
दर्पा(र्पो)द्यद्वादिसर्पाद्युपदमनविधौ पण्डितां कुन्दगौरां
ज्ञानेद्यद्बुजां जातां(?)प्रणमत शशिमौलिलसद्दिव्य भूषाम् ।।

वेष्टाभ्यां पिहितेरपंक्ति विहितैदंतैर्घनैः संवृता
(ओष्ठाभ्यां पिहितेरपं क्ति विहितै दंतैर्घनैः संवृता
(ओष्ठाभ्यां पिहितैश्च पङ्क्तिनिशितैर्दन्तैर्घनैः संवृता)
तीक्ष्ण वज्रवदत्र सर्वविदुषा या स्वामिनी संततं ।
(तीक्ष्णा वज्रवदत्र सर्वजगतां या स्वामिनी सन्ततम्।)
स(सा)मा(मां)चारु करोतु वादनिपुणं सर्वत्र सा वाग्रसा
एन(येन)स्यामहमेव सर्वविदुषां मर्त्यः समगेसरः
(येन स्यामहमेव सर्वविदुषामत्यर्थमग्रेसरः ।) ३५

[1]इन्द्रादि लोकपालैश्च वज्राद्यैस्तत्परं भवेत् ।
ब्राह्यादिभिस्त्रि(स्तृ)तीयं स्यात् मायाद्याभिस्तु तत्परम् ।। ३६

परवादीति सर्पह्रदिद्रा(ह्रद्रिदा)रिणीं(णि) चललोचने ।
सर्वज्ञान शक्ति रूपां ध्यायन् षट्कोणके बहिः ।। ३८

अङ्गशक्त्या महेशानि पञ्चावरणनायिकाम् ।
ध्यात्वा समयक् प्रसन्नात्मा जपेन्मन्त्रमनन्यधीः ।। ३९

---

1. क्रमोऽयं विदुषां परिशीलनार्हः । ३७ तमः श्लोकः उत्तरत्र चतुश्चत्वारिंशश्लोकस्य उत्तरार्धेन योजनीयः इति भाति ।

द्विलक्षं च पुरश्चर्या चतुर्लक्षं तु वा प्रिये ।
सर्षपैस्तु सितैःकुर्याद्होमं जपदशांशकम् ।। ४०

पयसा घृतयुक्तेन पायसेन हुनेद्व्रतीः (व्रती) ।
एवमाचरतः पुंसः कविता जृम्भते स्वयम् ।। ४१

वक्तुं न शक्नुवन्त्येव पठण (पुरत)स्तस्य वादिनः ।
कवीनां तार्किकाणां च चक्रवर्ती भवेदसौ ।। ४२

वचा(वचां)पिष्ट्वा विलिख्ये(यै) तद्भक्षयेद्योऽस्य वै मुखात्।
द्युः (द्यु) सरिल्लोलकल्लोलनिभा निर्याति भारती ।। ४३

एतस्य सदृशं किञ्चिन्नास्त्येव भुवनत्रये ।
वेदवेदाङ्गविद्वे विच्छोषयाशु सरस्वती (ति)(?) ।। ४४

चारुवादय सर्वज्ञं मेधीं वादिनि वादिनी (?) ।
ऐं च वाग्देवि काकुस्तं(वाक्स्तम्भं)शम क्लीं देवि तत्परम् ।। ४५

सरस्वतीति सौ जिह्वां मे वशं चा नयेति च ।
स्वाहान्तको महामन्त्रो वाक्स्तंभादिविमोचकः ।। ४६

---

1.अत्र चतुश्चत्वारिंश श्लोकस्य उत्तरार्धमारभ्य षट्चत्वारिंश श्लोकस्य पूर्वार्धपर्यन्तं श्लोकद्वयमपि नकुलीमालामन्त्रोद्धारकं भवति । अयं भागः पूर्वत्र सप्तत्रिंशश्लोकेन योजनीय इव भाति । अत्रत्या दोषाः मातृकान्तरपर्यवेक्षणेन शोधनीयाः ।

प्राणप्रतिष्ठामन्त्रस्य मूलं वाक्स्तम्भमोचकम् ।
जपन् सिद्धिमवाप्नोति वागैश्वर्यै(र्येऽ) तुलो भवेत् ।। ४७

आदावों ऐं तथा ह्रीं च ऐं क्लीं सौः(?)तथा भवेत् ।
एवं जप्त्वा महामन्त्रं सर्वसिद्धिं समश्नुते ।। ४८

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
चतुःसप्ततितमोऽध्यायः ।।



## ।। पञ्चसप्ततितमोऽध्यायः ।।

हसन्त्या मन्त्रराजस्य कालज्ञो ऋषिरुच्यते ।
छन्दो गायत्रमाख्यातं हसन्ती देवता मता ।। १

हं बीजं च नमः शक्तिः विघ्नसिध्यै रिपोर्मतः ।
योगः स्वर्था (र्थेऽप्य) विघ्नार्थे हामित्यादिषडङ्गकम् ।। २

आगुल्फान्तावलंबामरुणमणिनिभां कञ्चुकीं धारयन्ती
कादम्बर्याकषायीकृतनयनयुगा *कन्दलामन्दहासा ।
मेघश्यामा मृगाङ्कोल्लसितकबरिका पाणिपत्राब्जवेली(?)
श्रीलक्ष्मीष्टा हसन्ती मम भवतु सदा मन्त्रविघ्नप्रशान्त्यै ।।

हं हसन्त्यै नमो मन्त्रं(त्रः) षडर्णं(र्णो) विघ्ननाशनं (नः) ।
परकार्ये विघ्नकरं षल्लक्षं  प्रजपेन्मनुम् ।। ४

मन्त्रविघ्नाः विनश्यन्ति ततः सिद्धो भवेनमनुः ।। ५

रविदश रि(ऋ) तु पत्रं पावकाश्वं(श्रं) च वृत्तं
प्रतिलिपि मनुपूर्वं साध्यनामाभिवीतम् ।
भुवनदुरितकर्म ध्वंसना(स्यै)यैकहेतुं (?)
नतजनवरदं तं(?) विघ्नबीजं परेषाम् ।। ६

यन्त्रेण महताऽनेन यद्यत्साधयति क्षितौ ।
तत्तद्विघ्न(घ्नो) भवेदर्वाक् सर्वलोकेषु सन्ततम् (?)।। ७

---

* கலகலவெனும் ஒலியுடன் (புன் சிரிப்பு) சிரிக்கும் இயல்புள்ள.

सर्वेषां कार्यजालानि सर्वसत्वयुतानि च ।
प्रोक्तेन दिवसेनार्वाक् विफलानि भवन्ति ते (?) ।। ८

अविघ्नार्थं जपेत् देवि हसन्तीं विघ्ननाशनीम् ।
आमोन्नो भगवती(ति) हसन्त्यै च ततः परम् ।। ९

सर्वविघ्न विनाशायै महाभय पदं वदेत् ।
हरायै समस्तविघ्न नि(वि) च्छेदं कुरुयुग्मकम् ।। १०

मन्त्रोऽयं सर्वकार्याणामविघ्नकरणं परम् ।। ११

स्वरमनुदशपत्रं वर्तुलं मूलपूर्णं
परिकृत(?) गुणसाध्यं शक्तिबीजार्णपूर्णम् ।
लिपिदिनसमपूज्यं विघ्न विच्छेद सिध्यै
न तु भयकर मेतत् (?) मन्त्र विघ्न प्रशान्त्यै ।। १२

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
पञ्चसप्ततितमोऽध्यायः ।।



## ।। षट्सप्ततितमोऽध्यायः ।।

बालिकाद्यष्टशक्तीनां (नामृ)षिर्वैश्रवणः स्मृतः ।
छन्दोऽतिजगती प्रोक्ता देवता(स्)त्वष्टशक्तयः ।। १

श्रींबीजमत्य(थ) शक्तिः स्यात् योगः सर्वार्थसिद्धये ।
अमित्यादिषडङ्गं च [1]वामत्याद्यैश्च(?) विन्यसेत् ।। २

पङ्कजवसुमणिहस्त(ताः) वरदाभयचिह्नचारुबाहुलता(:) ।
चम्पकपुष्पसमाभा वन्दे बालाद्यखिल शक्तिवराः(:) ।। ३

[2]श्रीं न्प्रीं(?)ह्लीं यं (?) त्रयं प्रोक्त्वा क्लिंत्रयं बालिकापरं(म्)
हृदय(यं)गत ? सकल भुवनेति पदं वदेत् ।। ४

वृत्तान्ये(त्तज्ञे) सकलेत्युक्त्वा भुवनानन्दधा(का)रिणी । (?)
सकलेति पदं प्रोक्त्वा भुवनेश्वरि तत्परम् ।। ५

सकलेति ततः प्रोक्त्वा भुवनाधारभू वदेत् ।
ते वसुदे पदं प्रोक्त्वा वसुधारे ततः परम् ।। ६

वसुधारीति संप्रोक्त्वा धनकारी (रि) पदं ततः ।
धान्यकारी ऋद्धिकारी(?) समृद्धिकलि(रि) तत्परम् ।। ७

वैश्रवणायै सं प्रोक्त्वा स्वाहान्तो बालिकामनुः ।
अयुतं च पुरश्चर्यापञ्चकैः सिद्धिमश्नुते ।। ८

---

1. आमित्याद्यैश्च ।
2. मन्त्रस्यास्य प्रामण्ये ग्रन्थान्तर(मातृकान्तर) परिशीलनमेव शरणम् । मातृकान्तराऽनुपलम्भात् यथामातृकं प्रकाशितम् ।

सकलह्रीं इति प्रोक्त्वा सकलेति पदं ततः ।
भुवनज्ञानेश्वरि च सकलेति पदं भुव ।। ९

न विश्वरि(नेश्वरीति च) त्पश्चात् सकले ति पदं पुनः ।
भुवनेतिपदं प्रोक्त्वा वागीश्वरि ततः परम् ।। १०

वद युग्मं च वाग्वादिनि स्वाहेति विमलामनुः ।
हसका(क)ह्रा (ह)ल क्लीं प्रोक्त्वा सकलेतिभुवेति च ।। ११

न ज्ञानेश्वरि सकल भुवनेति पदं वदेत् ।
भोगेश्वरीति सकल भुवनेति पदं पुनः ।। १२

कामेश्वरि श्रीं ह्रीं क्लीं ह्रीं सहस्राक्षरि तत्परम् ।
ह्वश्रे सौ (?) सकल श्रीं च तुर्यानन्दमयेति च ।। १३

चतुर्वेदमये पश्चात् चतुस्तत्त्वमये वदेत् ।
चतुरात्मा (?)मये प्रोक्त्वा सकलेति भुवेति न ।। १४

परिपालन संप्रोक्त्वा समर्थेति पदं वदेति ।
मां पालय युगं स्वाहा मन्त्रोऽयं कमलामनुः ।। १५

हसका(क)हा(ह)ल ह्रीं प्रोक्त्वा वां(वं)पूर्वं वनमालिनी ।
लं यं त्रयं(?)महादेव घोष प्रोक्त्वा मये वदेत् ।। १६

महानन्दमये पश्चात् महाशतपदं वदेत् ।
क्रतु माया(मय्या) नन्दमयि अलक्ष्मी(म्) नाशय द्वयम् ।।१७

स्वाहान्तश्च(व)नमालिकामन्त्र उदाहृता(तः) ।
सकल ह्रीं ततः प्रोक्त्वा डंकारस्य चतुष्टयम् ।। १८

संभा(?)हङ्कार संप्रोक्त्वा रागद्वेषेति तत्परम् ।
लोभमोहपदं प्रोक्त्वा माछ(त्स)र्यादिपदंवदेत् ।। १९

जनितेति समस्तेति तथा पापहरे वदेत् ।
सर्वदुःस्वप्न तत्परम् नाशिनी(नि) सर्वबन्ध च ।। २०

मो(च)णी(नि) सर्वसिद्धीति करे सर्वपदं वदेत् ।
जन्मार्जितपापहारि(दारि)द्र्य(द्ग्र) दुःख ज्वरमित्यपि ।।२१

उत्थ(त्थं) छादय(शातय)युगं स्वाहा भीषिकायै विपूर्वकः ।
विभीषिकाया मन्त्रोऽयं सर्वपापप्रणाशनः ।। २२

क ये (ए) ईलेति ह्रीं प्रोक्त्वा यंकारस्य चतुष्टयम् ।
विविधेति स(न) तः प्रोक्त्वा मणिमौक्तिकतत्परम् ।। २३

राजं(जत्) कनकहारेति केयूराद्याभतत्परम् ।
रणमण्डितशरीरेति विविधेतिपदं सिता ।। २४

हरिचन्दनसंप्रोक्त्वा कुङ्कुमार्दि(र्द्री) वदेत् कृता(त) ।
शरीरे विविध प्रोक्त्वा सितमाला व(च) लंकृता(त) ।। २५

शरीरे विविध प्रोक्त्वा सिद्धविद्याघरेऽपि च ।
यक्षराक्षसगन्धर्वमनुष्यादिपदं वदेत् ।। २६

वान्ना(वाङ्ना?) थभूते विविध वसुशब्दं ततःपरम् ।
निकरेति च सारेण मां पूरय युगं वदेत् ।। २७

स्वाहान्तको मालिकाय (या)मन्त्रोऽयमखिलार्थदः ।
हसकहलह्रीं प्रोक्त्वाभं कारस्य चतुष्टयम् ।। २८

भक्तजनानुग्रहेकरे भक्ति(क्त)जनार्ति च ।
सा(ह)रे भक्तजन प्रोक्त्वा भवबन्धहरे ततः ।। २९

भक्तजनार्थत्वत्पाद(कृत्पाद)पद्मेमां भावये(य)द्वयम् ।
स्वाहान्तको मनुरयं शाङ्कर्याः परिकीर्तितः ।। ३०

सकलह्रीं तु संप्रोक्त्वा हंकारस्य चतुष्टयम् ।
हंसानु च ग्र ह(क)रे हंस मन्त्रार्थ संवदेत् ।। ३१

भूते हयगण प्रोक्त्वा पशुं गणपदं वदेत् ।
धनधान्यपदं पश्चात् दासी भार्या पदं वदेत् ।। ३२

पुत्रायुर्विद्या प्रज्ञा युर्(प्रज्ञाधर्मान्)धर्मान् प्रोक्त्वा समापदम् ।
लोकय द्वयमुच्चार्य स्वहान्तो मनुरुच्यते ।। ३३

नवमालिनिकामन्त्रः सर्वैश्वर्यफलप्रदः ।
बलिकाद्यष्टशक्तीनां मन्त्राः सर्वफलप्रदाः ।। ३४

श्रीषोडशार्ण तुल्याश्च सर्वैश्वर्यैककारणाः ।
अयुतं च पुन(र)श्चर्या चम्पकैर्होममाचरेत् ।। ३५

बलिका भोजयेत्पश्चात् अष्टैश्वर्यप्रसिद्धये ।
भूरेखाषट्कमालिख्य सर्वत्रैव सम(मा)ग्रकम् ।। ३६

पञ्चविंशतिकोष्ठानि प्रत्येकं संलिखेत्क्रमात् ।
पूर्वादिदिश्यां(क्षु)विंशश्च(?)विदिको(क्को)ष्टं शतं भवेत् ।।

बलिकां विमलं(लां)चापि कमलां वनमालिकाम् ।
विभीषिकां मालिकां च शांङ्करीं वन(नव)मालिकाम् ।। ३८

यथाक्रमेण संलिख्य पूर्वाद्याया(यां)दिशीश्वरि ।
शूलानि विलिखेद्धीमान् रेखाग्रे तु विशेषतः ।। ३९

माया संपुटितं(तां) श्रीं च तेष्वालिख्य यथाक्रमाम् ।
मध्यं श्रीबीजसंपूर्णं श्रीसूक्तेन विशेषतः ।। ४०

महाचक्रमिदं श्रेष्ठं अष्टैश्वर्यैककारणम् ।
लिखित्वा बिल्वफलके हैमे ताम्रेऽथवा प्रिये ।। ४१

जप्त्वा सहस्रं तन्मन्त्रं स्छा(स्था)पये(त्)स्वाङ्(क)णे गृहे ।
तस्मिन् गेहे महालक्ष्मीर्वसत्याभूतसंप्लवम् ।। ४२

क्षुत्पिपासादिशमनं सर्वसौभाग्यदायकम् ।
धारयेद्यदि कण्ठे वा श्रीस्तद्देहं न मुञ्चति ।। ४३

बालिकाद्यष्टशक्तीभि(?)रणिमाद्यादिभिः सह ।
तत्र लक्ष्मि(क्ष्मी)स्तु रमते छित्वा(स्थिरा)भूत्वा परात्परा।।४४

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
षट्सप्ततितमोऽध्यायः ।।



## ।। सप्तसप्ततितमोऽध्यायः ।।

अणिमाद्यष्टसिद्धीनां श्रीमान्नरायणः कविः ।
छन्दस्तु जगती प्रोक्त्वा अणिमाद्यास्तु देवताः ।। १

संबीजं कं ततः शक्तिः हंकीलकमथेश्वरि ।
योगः सर्वार्थसिध्यर्थे विनियोगो वरानने ।। २

त्रिपदैस्तु पुनस्तैस्तु षडङ्गं संप्रकीर्तितम् ।। ३

चिन्तारत्नाऽभयवरपाणिसरोजा सुधाकरोत्तंसाः ।
अणिमादिर्वसु(दीर्वसु)सिद्धि(द्धी)ररुणाकाराः समाश्रये नित्यम्।।

सकलेति हस प्रोक्त्वा कहलेति क ये (ए) परे ।
ईलह्रीं कार्ये(कए) ईल हसकहल संवदेत् ।। ५

सकलेति च ह्रीं प्रोक्त्वा हसकहलतत्परम् ।
कार्ये(क ए)ईलेति सकल ह्रीं प्रोक्त्वा मन्त्रउ(मु)द्धरेत् ।। ६

अणिमाद्यष्टसिद्धीनां मन्त्रं लोकेषु दुर्लभम् ।
षोडशार्णं यथा गोप्यं तद्वत्स्या(त्)त्रिगुणं परे ।। ७

सप्तकोटिमहामन्त्रेष्वेषुमन्त्रेषु सर्वतः ।
एतत्समानं नैवास्ति षोडशार्णं विनेश्वरि ।। ८

एतन्मन्त्रं तु जपतो वर्धन्ते सर्वसंपदः ।
सिद्धयश्चापि नृत्यन्ति पश्य पश्येति मामिति ।। ९

---

सकल हसकहल क एईल ह्रीं, कएईल हसकहल लकला ह्रीं हसकहल कएईल सकल ह्रीं इति अष्टसिद्धि मन्त्रस्वरूपं भवति ।

अहमेव तव प्रीतिं करिष्याम्यवलोकय ।
एतादृशं महामन्त्रं त्रिलक्षं प्रजपेद्बुधः।। १०

अणिमाद्यष्टसिद्दिं च प्रोप्नोति वरवर्णिनि ।
सर्वत्र विजयं तस्य तथा शत्रुक्षयं(?)भवेत् ।। ११

इहसिद्धिं समाश्रित्य देहान्तेरि पदं व्रजेत् ।
(अन्ते हरिपदं व्रजेत्) १२

बिन्दुत्रिकोणं वसुकोणसंज्ञं
दशारयुग्मं च चतुर्दशाश्रम् ।
सबिम्बयुक्तं मनुजालयुक्तं
यन्त्रं वरेण्यं त्वणिमादि चक्रम् ।। १३

एतद्यन्त्रं समालिख्य हैमे पट्टे महेश्वरि ।
धारयेद्यदि सर्वज्ञः सर्वैश्वर्यं समश्नुते ।। १४

सर्वेलोका वशं यान्ति साधकस्य तु किङ्कराः ।
स्त्रीजालं दास्यतां याति राज्ञां जालं महेश्वरि ।। १५

साधकस्य वशं याति जगत्सर्वं चराचरम् ।
ब्रह्मा विष्णुर्मयासार्धं वज्रपाण्यादयः सुराः ।। १६

वहन्ति धारकस्याज्ञां राज्ञामाज्ञां यथा जनाः ।
सर्वसिद्धिकरं मन्त्रं चक्रं सर्वार्थसिद्धिदम् ।। १७

षोडशार्णप्रकरणे प्रभावो वर्णितो मया ।
षोडशार्णं यथा गोप्यं तथा गोप्यमिदं प्रिये ।। १८

तव प्रीत्या मया प्रोक्तं नोक्तपूर्वं कदाचन ।
षोडशार्णाधिकारी यः तस्मै सिद्धिमनुं वदेत् ।। १९

नान्येषां परमेशानि वक्तव्यं सर्वदुर्लभम् ।
गुरुलाघवकार्याणि विचार्य तु विचक्षणः ।। २०

वदेत्सिद्धिमनुं मन्त्री सुखं प्राप्नोति साधकः ।। २१

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
सप्तसप्ततितमोऽध्यायः ।।



## ।। अष्टसप्ततितमोऽध्यायः ।।

कामेश्वर्यादिमन्त्राणां ऋषिः कामेश्वरः स्मृतः ।
गायत्रं जगती प्रोक्तं छन्दोऽतिजगती ततः ।।१

कामेश्वर्यादयो देव्यो देवताः परिकीर्तिताः ।
आद्यक्षरं तु बीजं स्यात् अन्त्यं शक्तिर्महेश्वरि ।। २

नानाभीष्टार्थसिध्यर्थे विनियोगो वरानने ।
कां भामादिषडङ्गं स्यात् करन्यासं(सस्)तथा प्रिये ।। ३

पुण्ड्रेक्षुचापबाणपाशाङ्कुशधारिपाणिपाथोजा(:) ।
वन्दे जपाशु(रु)णाङ्गीः [1]कामेश्वर्याभि(दि)देवतालिखिताः।।४

त्रिपुराध्यानध्येयः(याः) सर्वा नित्याः समाश्रये नित्यम् ।
[2]ह्लीं श्रीमयि(ह्लीं श्रीं ऐं)मिति संप्रोक्त्वा सकलेति च ह्लीं ततः।।

नित्यं क्लीने(नित्यक्लिन्नो)ति संप्रोक्त्वा तत्पश्चात्तु मदद्रवे।
सौ(सौः)कामेश्वरी नित्या श्रीपादुकां पूजयाति (मि) च ।। ६

कामैश्वर्य(कामेश्वर्या)महामन्त्रः सर्वसिद्धिप्रदायकः ।
[3]ह्लीं श्रीं मयीं(ऐं) च भगयुगे भा(भ)गिनीतिभा(भ)गोदरी ।। ७

भगमाले तु संप्रोक्त्वा तत्पश्चात्तु भगावहे ।
भगगुह्ये भगे योने तथा भग निपातिनि ।। ८

---

1. कामेश्वर्यादितिथि देवताः ऋध्यै ।
2. वस्तुतः श्रीविद्या सपर्यायां ऐं ह्लीं श्रीं अं ऐं इत्येव आचार सिद्धम्। "नित्योत्सवे"ऽपि एवमेव ।
3. ऐं ह्लीं श्रीं अं ऐं इति वा संगतः पाठः ।

सर्व भर्गे(भगे)ति संप्रोक्त्वावशंकरि ततः परम् ।
भगरूपिणि तत्पश्चात् नित्यक्लिन्नेति संवदेत् ।। ९

भं(भग)स्वरूपे सर्वाणि भगि(गा)नि मे ह्यानय तत्परम्(वरदे)।
रेते सुरेते तत्पश्चात् भगक्लिन्नो(न्ने)ततो वदेत् ।। १०

क्लिन्नद्रवे क्लेदय युगं द्रावयेति युगं ततः ।
अमोघे भग निच्चा(विच्चे)वेक्षु(च क्षुभ)क्षोभय तत्परम् ।।११

सर्वसत्वानि(नी)ति प्रोक्त्वा भगेश्वरि पदं वदेत् ।
ऐं ब्लूं ब्लें ब्लूं (ऐं ब्लूं जें ब्लूं) ततोमोम-
मूं हीं हं क्लीं न्ने तथा वदेत् ।। १२

(ऐं ब्लूं जें ब्लूं भें ब्लूं भें ब्लूं मोंब्लूं हें ब्लूं हें क्लिन्ने तथा वदेत्)
सर्वाणि च भगानीति मे प्रोक्त्वा वशमानया(य) ।।
स्त्रीं च हल वतातीं ह्रीं
(स्त्रीं च हर ब्लें ह्रीं आं
भगमालिनी तत्परम् ।। १३

श्रीपादुकां पूजयामि भगमाला मनुर्भवेत् ।
त्रिसहस्रं पुरश्चर्या(र्यां)कृत्वा काम्यानि साधयेत् ।। १४

यदि काम्यफलापेक्षा सान(साध)कस्य महेश्वरी(रि) ।
तदा प्रत्यक्षचक्रे तु पूजयेद्भगमालिनी(म्) ।। १५

काम्यानि शीघ्रं सिध्यन्ति देवि प्रत्यक्षपूजनात् ।
स्वयं नारायणो भूत्वा स्वपत्नी(त्नीं) भावयेच्छ्रियम् ।। १६

*तस्याभ्यङ्गादिकं कृत्वा स्नापयित्वा महेश्वरि ।
वस्त्रादिभिरलङ्कृत्य नानाभूषणभूषिताम् ।। १७

दिव्यमाल्याम्बरधरां दिव्यगन्धानुलेपिताम् ।
सुगन्धी(न्धि) कुसुमाकीर्णकबरीभारशोभिताम् ।। १८

कस्तूरीतिलकां चारुकुसुमारुणविग्रहाम् ।
पीठे संस्थापयेद्देवीबुध्या साधकपुङ्गवः ।। १९

उत्तमा तु स्वपत्नी स्यात् मध्यमा स्वेन दीक्षिता ।
अधमा परपत्नी स्यात् दीक्षितापि महेश्वरि ।। २०

दीक्षिता मध्यमा या सा नान्यं कञ्चन वीक्षयेत् ।
दक्षिता(वीक्षिता) यदि सा देवि परस्त्रीष्वधमा मता ।। २१

त्रिविधा(:) शक्तयः प्रोक्ता उत्तमाधम मध्यमाः ।
नान्यत्र पूजा कर्तव्या कृता चे नि(न्नि)ष्फला भवेत् ।। २२

एत देवि(द्देवि)तव प्रोक्तं रहस्येन सुदुर्लभम् ।
स्वदेहं चैव देवीवादल(देव्यर्वाक् स्वलं)कृत्य तु साधकः।।

यागस्छा(था)नं विसे(शे)न्मन्त्री निश्चलेनान्तरात्मना ।
गृह्वाधनं(स्मृत्वा [धेनुं] देवीं)विशेत्तत्र तन्मन्त्रेण महेश्वरि ।।

सामान्यार्ध्येण देवेशि सूर्यमण्डलमालिखेत् ।
रचयेत्कुङ्कुमात्ते(क्ते)न गन्धपुष्पाक्षतैर्यजेत् ।। २५

मार्ताण्डमण्डलं पूज्य सावृती(सावित्री) शक्तिसंयुतम् ।
सामान्यार्ध्योदकेनैव प्रोक्ष(क्ष्य) स्वात्मनि योजयेत् ।। २६

---

* तदभ्यङ्गादिकं कृत्वा ।

तत्पश्चात् द्वारयजनं द्वारपालादिभिः सह ।
देहलीमर्चयेत्पश्चात् सरस्वत्यादिगायिकाः ।। २७

विघ्नत्रय(त्रयं) निवार्याशु गुरुवन्दनमाचरेत् ।
स्वावृत्ति(सुव्रती)गुरुमभ्यर्च्य विघ्नेशं तत्परं भवेत् (यजेत्)।।

दीपनाथार्चनं पश्चात् कृत्वा पुष्पादिभिः प्रिये ।
न्यासजालान्यसेदेहे(न्न्यसेद्देहे) तत्पश्चात् गुरुपादुके ।। २९

सहस्रारे ब्रह्मरन्ध्रे न्यासं कृत्वा ततः परम् ।
दक्षिणे शुद्धकलशं शंकं(ङ्खं) पूर्वोक्तमार्गतः ।। ३०

अभिषेकादिकं तेन कृत्वा देव्या महेश्वरि ।
पीठपूजा(जां)चरेत्पश्चात् पुष्पैश्च सिततण्डुलैः ।। ३१

सर्व प्रा(प्र)कारमभ्यर्च्य तत्पश्चादर्घ्यशोधनम् ।
आदौ शङ्खं तथा कुम्भं श्रीपात्रं शक्तिपात्रकम् ।। ३२

भोगपात्रं ततः पश्चात् गुरुपात्रं ततः परम् ।
बलिपात्रं च षट् प्रोक्तं आत्मपात्रेण सुन्दरि ।। ३३

शङ्खं कुम्भं च वामे स्यात् श्रीपात्रं दक्षिण(णे)क्रमात् ।
आधारं(साधारं)च त्रिपात्रं स्यात् तत्तत्स्थानेषु विन्यसेत् ।।

आत्मतत्वा धारशक्त्यै वौषट् प्रोच्च(रे)त्प्रिये ।
इत्याधारं प्रतिष्ठाप्य तत्र वह्निकला यजेत् ।। ३५

मूलाधाराग्निमाधारे आवाह्य तु विचक्षणा(णः) ।
वह्नेर्दशकला ध्यायेत् उदितार्कारुणप्रभा(:) ।। ३६

वेणीकृता(त)लसत्केशाः पात्रमस्तकभूषिताः ।
*रक्त(त्न)कम्बुकभूषाढ्या मुक्ताहारविभूषिताः ।। ३७

वृत्तोरुतुङ्गकठिनस्तनमण्डलमण्डिताः ।
मधुपानकृतोल्लासपरमानन्दमन्दिताः ।। ३८

विमट्(अमन्द)शक्तिस्फुरणाः प्रकाशपदविश्रुता(:)? ।
एवं ध्याये(यन्) जपेद्वन्ह्वे (ह्नि) कलादशकपी(मी)श्वरि ।।

विद्यातन्त्रुथ(त्वाय) वौषट् च प्रोक्त्वाशङ्खं तथोपरि (?) ।
आधारेषु च पात्राणि स्थापयित्वा विचक्षणः ।। ४०

स्फ्रूं महालक्ष्मीश्वरीति परमेति पदं वदेत् ।
सोमसूर्याग्नि संप्रोक्त्वा भक्षिणीति वदेत्ततः ।। ४१

आगच्छेति युगं प्रोक्त्वा विशयुग्मं ततः परम् ।
पात्रं प्रति गृहं(ह्ण हुं)फट् च स्वाहान्तः पात्रशोधकः।।४२

मनुनानेन पात्रेषु पुष्पं निक्षिप्य तत्परम् ।
हृदयात् सूर्यबिम्बं च समावाह्य स्वमन्त्रतः ।। ४३

तपिन्यादिकलां(लाः) ध्यायेत् तरुणारुणकुन्तलाः ।
कस्तूरीतिलकोद्भासा चापबाणधराः शुभाः ।। ४४

मधुपानकृतोल्लासलीलाचतुरविग्रहाः ।
प्रकाशस्फुरणाधारा वृत्तसंधारणे रताः ।। ४५

तपिन्यादिकला इष्ट्वा पूर्वोक्ता (क्त) यजनक्रमात् ।
एलालवङ्गतक्कोल जाजिकाफलसंयुतम् ।। ४६

---

* रत्नकञ्चुक ।

सुगन्धिकुसुमैर्दिव्यैः पूरयेत् पात्रके वृ(ऽमृ)तम् ।
शङ्खे शुद्धजलं पूर्य(?) शिवतत्वाय संवदेत् ।। ४७

श्री सोम मणडलायेति नमः प्रोक्त्वा तु पूरयेत् ।
ब्रह्माण्डखण्डसंभूतमशेषरससंभृतम् ।। ४८

आपूरितं महास्वाद्यं पीयूषं खाद्यमानयेत् (?) ।
शङ्खं संपूर्य तत्पश्चात् कलशे कारणेऽपि च ।। ४९

श्रीपात्रादिक्रमाद्देवि पूरयेदमृतं बुधः ।
नवयोनिं समालिख्य जलमध्ये महेश्वरि ।। ५०

चन्द्रमण्डलमावाह्य षोडशान्तेन्दुमण्डलात् ।
अमृतादिकला ध्यायेत् श्लक्ष्णशुक्लांशुकावृता(:) ।। ५१

चन्द्र(?) बाणधरा(:) सौम्याः क्वणज्जघनमण्डलाः ।
प्रकाशविमर्शाफाराः ब्रह्मानन्दरसोज्ज्वलाः ।। ५२

एवं ध्यात्वा जपेद्विद्वान् अमृतादींश्च(दीश्च) पूर्ववत् ।
शङ्खस्य कुम्भपात्राणां समानं च कलात्रयम् ।। ५३

एवं शङ्खं समभ्यर्च्य कारणे पूर्ववद्यजेत् ।
तस्मिन् जले महादेवि वापिकात्रयसा(मा) यजेत् ।। ५४

अमृताख्या(ख्य)वापिकायां यजेत्तारां सदाम्बिके ।
ओं तारेति च तुत्तारेतुताह(तुरे च)स्वाहयो(या) युतः ।। ५५

तारायास्तु महादेव्या मन्त्रोऽयमृताख्यकः ।
बिन्दौ यजन्महातारां त्रिकोणे मधुरामपि ।। ५६

क्लादिनीं जीविनीं चैव जराहन्त्रीं तदग्रके ।
योगहन्त्रीं च मरणहन्त्रीमपि यजेत्क्रमात् ।। ५७

षट्कोणे वज्रिणीं वज्रकायां वज्रास्यपं च(ञ्ज)राम् ।
वज्रहस्तकसंज्ञां च तथा वज्रत्वचामपि ।। ५८

वज्राख्यकवचां देवीं षट्कोणे तु (षु) यजेत्क्रमात् ।
आरु(यु)षं वसुकोणेतु परमायुषमेव च ।। ५९

दीर्घायुषं ततःपश्चात् विश्वायुष त(म) तः परम् ।
चित्तायुषं च संपूज्य दिव्यायुषमतः परम् ।। ६०

ब्रह्मायुषं च संपूज्य विष्ण्वायुषमथाम्बिके ।
चतुर्दले यजेद्देवि अस्वप्नादि चतुष्टयम् ।। ६१

अस्वप्नामबुभुक्षां च अपिपासामले अपि ।
तदग्रे पूजये दैसां (?)तत्पश्चाद्धर्मदेवता(म्) ।। ६२

आदित्यबुद्धेश्वरं(?)पूज्य गतदीक्षा(क्षां)सुपूर्विकाम् ।
चतुरस्रे निर्विषां च वृषभारां ततः परम् ।। ६३

निर्गसं (?)निर्भयां चैव पूजयेदावृतिक्रमात् ।
आनन्दवापिकां तोये सावृतिं वारुणीं यजेत् ।। ६४

ओं ह्रीं वामिति संप्रोक्त्वा वारुण्यै स्वाहया युतः ।
वारुण्या मूलमन्त्रं तु जपेद् द्वादश वारकम् ।। ६५

बिन्दौ देवीं समभ्यर्च्य वह्नावानन्दभैरवम् ।
आनन्दभैरवीं पश्चात् मदिरामपि सुव्रते ।। ६६

आदिमध्यान्तमदाः कोणाग्रेषु यजेत्क्रमात् ।
गौडीं पौष्पीं च माध्वीं च पैष्टीं द्राक्षीं च पञ्चमीम् ।। ६७

तालीं च हेमतालीं च खार्जूरीं लाङ्गलीमपि ।
भालीं मौलीं च षट्कोणे तत्पश्चादष्टपत्रके ।। ६८

मत्तां चैव तथोन्मत्तां मत्तोन्मत्तां च मादिनीम् ।
अतिमत्तां महामत्तां सर्वमत्तां च मत्तिनी(म्) ।। ६९

तदग्रे चषकधरां मछां(त्स्य) मांसधरामपि ।
रक्तगन्धधरां पुष्पधरां रतिधरामपि ।। ७०

आनन्दधारिणीं देवीं तदग्रे सम्यगर्चयेत् ।
पानसं द्रक्ष(द्राक्ष) मद्यं च मधु(धू)कंस्व(ख)र्जरं तथा ।। ७१

सधू(कु) माद्यं च माध्वीकं क्षे(क्षौ)[मै]रेयं नालिकेरजम् ।
इक्षु मद्धूर्तमद्यं च द्वादशारे(?)समर्चयेत् ।। ७२

सुबुद्बुदं सुवासं च सुखादं चैव तत्परम् ।
सुनीतीव्यवहारं तु यजेद्वेददलेद्बु(लेबु)धः ।। ७३

अरुणं(णां) धवलां चैव पीतां नीलां च भूपुरे ।
एवमभ्यर्च्य देवेशि कुरुकुल्यां(ल्लां) समर्चयेत् ।। ७४

विमर्शवापिकामध्ये कुरुकुल्यां समर्चयेत् ।
त्रितारीं च कुमारीं च कुरुकुल्ले ततः परम् ।। ७५

हुंफट् स्वाहान्तकं मन्त्रं जपेद् द्वादशवारकम् ।
बिन्दौ देवीं समावाह्य त्रिकोणे च अरिद्रिणीम् (?) ।। ७६

दण्डिनीं नौविनीं चैव कामतर्यां रसाश्रके ।
क्रोधतरीं लोभतरीं मोहतरीं च तत्परम् ।। ७७

मदमात्सर्यतरीमष्टकोणे...(षु च) ततः परम् ।
धर्मतरीमधर्मतरीं ज्ञानतरीं च तत्परम् ।। ७८

अज्ञानवैराग्यतरीं अवैराग्यतरीं तथा ।
ऐश्वर्यानैश्वर्यतरीं चतुरस्रे च तत्परम् ।। ७९

उत्तारिकां समभ्यर्च्य तारिकां पूर्वमर्चयेत् ।
सन्तारिकां समभ्यर्च्य तथा निस्तारिकां यजेत् ।। ८०

ब्रह्मादीनां पञ्चकाल(कलाः) जपेत्पूर्वोक्तमार्गतः ।
ओं ह्रीं ह्रीं हूं तथा क्ष्म् यूँ शुक्रेति संवदेत् ।।८१

शापा नां(दां) क्लीममोघास्त्र(स्त्रे)यासौ(णाशु)मोचन मोचय ।
हुं फट् स्वाहान्तकं मन्त्रं दशवारं जपेत्ततः ।। ८२

ओं ह्रीमिति महादेवि वारुणीजलमूर्तये ।
सर्वदोषशुक्रशापविमो च (चि) कायै ततः परम् ।। ८३

स्वाहान्तकं मनुं देवि दशवारं जपेद्बुधः ।
आनंदो ब्रह्म मन्त्रं च दशवारं जपेद्बुधः ।। ८४

एताः कला मातृकां च अखण्डैका रि(दि)कान्मनून् ।
अमृतेशीं दीपिनीं च मूलविद्यामपि क्रमात् ।। ८५

एतद्वित्रिचतुः पञ्च द्विचतुर्नवमं तथा ।
संस्पृष्ट्वा कलशं देवि प्रजपेद्धेनुमुद्रया ।। ८६

कुम्भं स्पृष्ट्वा महादेवि स्मजला
(मन्त्रजालं ज) पेत्क्रमात् ।
चक्रवालीं च तत्पश्चात् विमर्शीनाम तत्परम् ।।(?) ८७

तत्पश्चाद्वारुणीसूक्तं पूर्वाम्नायादिमन्त्रकम् ।
श्रीसूक्तमथ पुंसूक्तं श्रीविद्या मं व्रतमुत्तमंत्रकं ।।
(श्रीविद्या मन्त्रमुत्तमम्) ८८

श्रीविद्यासंपुटंचैव पञ्चाशत्शतमेव हि ।
कलशे कारणे जप्य(प्यात्) एतत्सर्वं महेश्वरि ।। ८९

धूपदीपादिनैवेद्यं कृत्वा सर्वोपचारकम् ।
कारणामृतबिन्दुं च शङ्खे किञ्चिद्विनिक्षिपेत् ।। ९०

शंखांपु(शङ्खाम्बु)ना तु संप्रोक्ष्य मा(स्वा)त्मानं प्रतिमादि च।
श्रीपात्राद्यर्चनं कुर्यात् पद्मपत्रान्तमीश्वरि ।। ९१

श्रीपात्रे त्वात्मपात्रे च कारणे इव संयजेत् ।
शक्तिपात्रे च भोगं (गे)च गुरुपात्रे तथैव च ।। ९२

बलिपात्रे महेशानि कलात्रितयमर्चयेत् ।
गुरुपात्रे यजेद्देवि श्रीनाथादि महामनुम् ।। ९३

श्रीपात्रस्थाऽमृतं सर्वपात्रेषु च विनिक्षिपेत् ।
एवमर्घ्यविनि(धिः) प्रोक्तः प्रत्यक्षेध(य)जने तव ।। ९४

अर्घ्यशुद्दिं समाकृत्वा(?)शुद्दिं बिन्दुं च मध्य च (?)।
स्नानमार्गेण देवेशि सर्वाङ्गस्नानमाचरेत् ।। ९५

आत्मपात्रं समुद्धृत्य आर्द्रज्योत्या मनुं स्मरन् ।
श्रीनाथायै(दि)गुरुन् मूर्ध्नि गुरुविद्यामनुं यजेत् ।। ९६

मूलाधारे च गणपं कुलकुण्डलिनीमपि ।
आत्मा ना(न)मन्तरात्मानं परमात्मानमेव च ।। ९७

ज्ञानात्म(त्मा)नं च संपूज्य पश्चात्तत्वचतुष्टयम् ।
कृत्वा शक्त्या सह प्रीत्या यष्ट्वा पादचतुष्टयम् ।। ९८

शक्तिपादे समभ्यर्च्य पश्चात्पूजां समारभेत् ।
प्रत्यक्षचक्रं संपश्यन् प्रदीपे ज्वलति द्वये (?) ।। ९९

श्रीपात्रबिन्दुना देवि(वी) मर्चयेन्मूलविद्यया ।
कृत्वा तद्बिन्दुना षोडशोपचारं महेश्वरि ।। १००

[1]षडङ्ग गुप्त(?) अभ्यर्च्य नित्याषोडशकं ततः ।
परशिवादि नाथांश्च मंत्री(मित्रे) शादीं(स्त)ततः परम् ।।

गुरुपात्रामृताद्देवि यजेत्सर्वार्थसिद्धये ।
अणिमाद्यादिदेवीश्च कामाकर्षणिकादिकाः ।। १०२

अनङ्गकुसुमादीश्च सर्वसंक्षेभिणीमुखाः ।
सर्वसिद्धिप्रदाद्याश्च सर्वज्ञादीर्महेश्वरि ।। १०३

वशिनीप्रमुखा देवि तथा कामेश्वरीत्रयम् ।
अर्चयित्वा ततः पश्चात् ब्रह्मादीनपि तत्परम् ।। १०४

त्रिपुरादि(?) महादेवि रत्यादिमिथुनं त(प)रम् ।
ऋद्ध्यादिमिथुनं पश्चाद्रेणुकादिचतुर्दश ।। १०५

अणिमदि अष्ट(द्यष्ट)शक्तीं(श्च)च कामेश्वर्यादिषोडश ।
श्रिया(?)दीश्च यजेत्पश्चाच्छाङ्कर्यादिमुखाःपरम् ।। १०६

---

1. षडङ्गदेवीरभ्यर्च्येति पाठः उपपन्नः ।

इन्द्राद्यष्ट  महेशानि मदकादि चतुर्दश ।
शक्तिपात्रामृतेनैवमर्चयेन्मनुनाम्बिके ।। १०७

चक्रेशीस्त्रिपुरादीश्च यजेच्छ्रीपात्रबिन्दुना ।
समस्तप्रकटागुप्तास्तथा गुप्तरा मताः ।। १०८

संप्रदायकुलोत्तीर्णा निगर्भाश्च रहस्यकाः ।
अतिरहस्यास्तु तत्पश्चापरापरहस्यकाः ।। १०९

षोडा(षडा)धारशक्तीश्च मातृकाश्चैव भोगतः ।
समभ्यर्च्य महेशानि धूपदीपांश्च दर्शयेत् ।। ११०

नैवेद्यं च महत्कृत्वा पायसास[1](न्न)घृतेन च ।
परमान्नेन वै देवि प्रत्यक्षममृतेन च (?) ।। १११

वटुकादिबलिं कृत्वा वामभागे च मण्डलम् ।
शक्तेर्वै मण्डलं स्थाप्य पादौ प्रक्षाल्य सुन्दरि ।। (?)११२

भोगामृतेन दूत्यास्तु पादे पादचतुष्टयम् (?) ।
संपूज्य विधिवद्गन्धं धूपं दीपं प्रदृश्य(दर्श्य) च।।११३

भोगपात्रं करे दद्यात् अलिपात्रं समुच्चरन् ।
त्रिपादयित्वा तां दूति एकतत्वचतुष्टयम् (?) ।। ११४

दत्वा भक्तकरे दद्याद्वसतुभ्यामिति क्रमात् (?)
ओं ह्रीं श्रीं स्वच्छ संप्रोक्त्वा प्रकाश परिपूर्ण च ।। ११५

परामहासिद्धविद्या कुलयोगिनि ह्रीं वदेत् ।
स्वीकुर्याच्च तदा दत्तममृतं परमेश्वरि ।। ११६

---

1. पायसेन घृतेन चे ति वा ।

विनियोगं चरेत्पश्चात् यथानुक्रमयोगतः ।
स्वीकृत्य कुलदीपानि(?) तन्मन्त्रेण महेश्वरि ।। ११७

ऐं सर्वतेजोमयि च क्लीं सर्वेतिपदं वदेत् ।
आपत्प्रणाशनि च सौः सर्वसिद्धिं प्रयच्छ च ।। ११८

स्वाहामन्त्रेण देवेशि स्वीकुर्यात्कुलदीपकम् ।
श्रीषोडशार्णमुच्चार्य श्रीसूक्तं तत्परं वदेत् ।। ११९

कामादयोऽदिमारभ्य सर्वानन्दमये तथा ।
चक्रे च वेदविद्यादिमन्त्रमुच्चार्य मन्त्रवित् । १२०

श्रीपात्रामृतमापीय शक्तिभोगं च पूर्ववत् ।
सर्वान्त(न्ते) गुरुपात्रं च समुद्धृत्य महेश्वरि ।। १२१

श्रीनाथादिक्रमेणैव पादुकां मूर्ध्नि संयजेत् ।
आम्नायपादुकाः पूज्य ऊर्ध्वाम्नायक्रमाच्चिरे (च्छिवे) ।।

स्मर्तव्या पादुका पूर्वं चरणं तदनन्तरम् ।
पञ्चवांनाथव(?) ...मूलविद्यादिषोडश ।। १२३

आधारविद्याषट्कं च महादेवि यजेत्ततः ।
एवमभ्यर्च्य देवेशि दद्यात्पात्रं गुरोः करे ।। १२४

गुरावसंन्निष्टे तु (गुरावसन्निकृष्टे तु)
गुरुं ध्यात्वा स्वयं प्रिये ।
स्वीकृत्य पात्रं सर्वाणि जले पात्राणि संक्षिपेत् ।। १२५

तत्सर्वं शङ्खतोयेन प्रोक्ष(क्ष्य)मन्त्रेण मन्त्रवित् ।
प्रत्यक्षामपि देवेशि नत्वा स्तुत्वा महेश्वरीम् ।। १२६

आशीर्वादं तथा दत्तं प्रगृह्य शिरसा बुधः ।
इति सं यो(य)ज्य तां देवि पश्चाद्धोमं समाचरेत् ।। १२७

कुण्डेऽपि देवीमावाह्य साङ्गावरणसंयुताम् ।
सुधाम्बुना समभ्यर्च्य हुनेदष्टोत्तरं घृतैः ।। १२८

हुत्वा पश्चाच्च तत्कर्म समाप्य परमेश्वरि ।
आनन्दयागं कुर्वीत सर्वकाम्यार्थसिद्धये ।। १२९

एवमाचरतः पुंसो वर्धन्ते सर्वसंपदः ।
अहन्यहनि देवेशि वर्धते श्रीरचञ्चला ।। १३०

एत्समानं नैवास्ति यजनं (बहु) दुर्लभम् ।
एतत्सर्वं महेशानि रात्रौ कुर्याद्विचक्षणः ।। १३१

आनन्दयागे देवेशि अर्चयेद्भगमालिनीम् ।
तेन सर्वा वशं यान्ति मेदनस्यैव(मदनस्येव) योषितः ।।

यदि काम्या फलापेक्षा तदेतत्सर्वमाचरेत् ।
एतस्मिन् क्रियमाणे तु अपवर्गं(र्गो) नहीति न ।। १३३

किन्त्वैश्वर्यप्रधानेन मोक्षं स्याद्वरवर्णिनि ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
अष्टसप्ततितमोऽध्यायः ।।



## ।। एकोनाशीतितमोऽध्यायः ।।

ईश्वर उवाच

रश्मिमालां महादेव चक्रवालीं च तत्परम् ।
पूर्वाम्नायादिमन्त्रांश्च वारुणीं चैव तत्परम् ।। १

संविन्नाम ततः पश्चात् यथावद् वक्तुमर्हसि ।
श्रीनाथादिमहामन्त्रान् क्रमान्मे वद तत्वतः ।। २

तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि ।
धियो योनः प्र संप्रोक्त्वा चोदयात्प्रथमं मता ।। ३

एषा गायत्रीह्युद्दिष्टा परब्रह्मस्वरूपिणी ।
यत इन्द्र भयामहे ततो नो अभयं कृधि ।। ४

मघवंशक्ति (वञ्छग्धि) संप्रोक्ता तव तं नेति ऊतये ।
विद्विषो विमृधो प्रोक्तवा जहि मन्त्रं समुच्चरेच् ।। ५

अभयं करविद्येयमखिलार्थप्रदायिनी ।
धृणिः सूर्येति संप्रोक्त्वा आदित्योमिति संवदेत् ।। ६

सौराष्टाक्षरविद्येयं सर्वरोगार्तिनाशनं(शिनी) ।
प्रणवं परो रजसे(से) सावदो(दों)तदनन्तरम् ।। ७

गायत्री तु तुरीया स्यात् अपवर्गप्रदायिनी ।
तारं परं ब्रह्मविद्या मोक्षदा परमेश्वरि ।। ८

सूर्याक्षितेजसे प्रोक्त्वा तत्पश्चान्नम संवदेत् ।
खेचराय नमः प्रोक्त्वाऽमृतं गमय[1] तत्परम् ।। ९

उष्णोभवांचुचूभूयो (उष्णो भगवान् शुचिरूपो)
हंसो प्रोक्त्वा बवानिति(हंसो प्रोक्त्वा भगवानिति) ।
चिरप्रकृतिरूपाश्च(शुचिरप्रतिरूपश्च)
विश्वरूपं वदेत्ततः ।। १०

घृणि सं(नं)जात संप्रोक्त्वा वेदसं च हिरण्मयम् ।
जो(ज्यो)तिरेकं तपन्तं च सहस्त्रेति पदं वदेत् ।। ११

रश्मिश्च शतथा(धा)प्रोक्त्वा वर्तमानः पदं वदेत् ।
प्राणः(:)प्रजानामुद येतेषु(दयत्येष)सूर्यश्च संवदेत् ।। १२

तारं नमो भगवते श्रीसूर्याय पदं वदेत् ।
अहोवाहिनि संप्रोक्त्वा वाहिनीति ततः परम् ।। १३

एवं पुनश्च संप्रोक्त्वा स्वाहान्तं मन्त्रमुच्चरेत् ।
वयस्सुपर्णामारभ्य बद्धानित्यन्तमुद्धरेत् ।। १४

पुण्डरीकाक्षाय नमः तत्पश्चादमलेक्षणा[2] ।
य नमः कले(कमल)प्रोक्त्वा
ईक्षणाय नमः पदम् ।। १५

---

1. अत्र असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मा अमृतं गमयेति ऋगत्र योजनीया भवति ।

2. पुण्डरीकाक्षाय नमः, पुष्करेक्षणाय नमः, अमलेक्षणाय नमः, कमलेक्ष णाय नमः, विश्वरूपाय नमः, श्रीमहाविष्णवे नमः, इति चाक्षुष्मती विद्या ।

विश्वरूपाय तत्पश्चात् श्रीमहाविष्णवे नमः ।
इयं चाक्षुष्मती विद्या षोडशांशस्वरूपिणी ।। १६

तारं नमो भगवते गन्धर्वेति पदं वदेत् ।
राज विश्वावसो प्रोक्त्वाममाभिलषितां वदेत् ।। १७

इष्टकन्यां प्रयच्छेति स्वाहान्तो मन्त्र उच्यते ।
गन्धर्वराजविद्येयं कन्यासिद्धिप्रदाव(म)ता ।। १८

तारं नमश्च रुद्राय यच्छिष(पथिष) दे ततो वदेत् ।
स्वस्ति मा संपा ल(र)येति पथिषद्रुसंज्ञिका ।। १९

अच्युताय नमः प्रोक्त्वा आनंदा(अनन्ताय)नमो वदेत् ।
गोविन्दाय नमः प्रोक्त्वा विद्या नामत्रयात्मिका ।। २०

ओं तारे चेति तुत्तारे तुत्तार(तुरे च)स्वाहया युतः ।
ताराविद्या महेशानि जलापच्छमनी मता ।। २१

महागणपतेर्मन्त्रस्त्वष्टाविंशतिवर्णकः ।
तारं नमः शिवा ये(यै) च ओं नमः शिवाय च ।। २२

द्वीपकं(इयं पं) चाक्षरी विद्या भोगमोक्षफलप्रदा ।
ऊँ जूं सः ऊँच्चरेन्मोच(उच्चरेत् मां च)पालयेति युगं ततः।।

मृत्युञ्जयस्य विज्ञेयं(विद्येयं)सर्वमृत्युप्रशान्तिदा ।
धारणा ब्रह्मविद्या च तत्पश्चात्परमेस्वरि ।। २४

आ(अ)कारादिक्षकारान्तमातृकापरिकीर्तिता[1] ।
क्लीं ईं ऐं इति संप्रोक्त्वा हसौं दुः इति सं [2]वदेत्।।(?)२५

हसौं : प्रक्त्वा अ ऐं क्लां ईं विद्या संपत्करीमता(?)।
संसृष्टित्यै तथा (संसृष्टि नित्ये)स्वाहा
हं पूर्वस्थिति संवदेत् ।। २६

पूर्णे नमश्च ईं(रं)प्रोक्त्वा महासंहारिणीति च ।
कृशे प्रोक्त्वा चण्डकालि फट्ईं(रं)हसखफ्रेमिति ।। २७

म मा(हा)नाख्ये च संप्रोक्त्वाऽनन्तभास्करि तत्परम् ।
महाप्रोक्ता चण्डकालि फट्रं हसखफ्रेमिति ।। २८

महाचण्डाययोगेसूः (महाचण्डयोगेश्वरि)
कला(काल)संकर्षिणीमता ।
[3]त्रितारं च समुद्धृत्य हसखफ्रेमनन्तरम् ।। २९

हसौः अहंयुगं प्रोक्त्वा हसौं दसि(?)हसखफ्रेमिति ।
तितारं च ततः पश्चात् ........... ३०

परा भट्टारिका विद्या सौरित्येव महेश्वरि ।
अनुलोमविलोमा च कुमारी बालिका मता ।। ३१

---

1. अत्र हादिविद्या वक्तव्या ततः परं सम्पत्करी इति क्रमः ।
2. संपत्करी विद्या क्लीं हैं ह्सौः ह्सौः हैं क्लीम् ।
3. ऐं ह्रीं श्रीं हसखफ्रें हसौः अहमहं हसौः हसखफ्रें श्रीं ह्रीं ऐं इति ।

ह्रीं श्रीं क्लीं ओं नमो प्रोक्त्वा भगवति तत्परम् ।
अन्नपूर्णेश्वरि प्रक्त् ममाभिलषितं वदेत् ।। ३२

अन्नं प्रयच्छ स्वाहा च विद्यापूर्णात्मिकान्नदा ।
आं ह्रीं क्रों तार पूर्वं च एहि देवि वदेत्ततः ।। ३३

परमेश्वरि संप्रोक्त्वा स्वाहाश्वारूढसंज्ञिका ।
त्रितारीं च कुमारीं च हसखफ्रेमनन्तरम् ।। ३४

हसौं युग्मं वदेच्छ्रीं च रामानन्दपदं ततः ।
नाथ प्रोक्त्वा पादुकां च पूजयामीति संवदेत् ।। ३५

श्रीख्याति पादुका विद्या सर्वसिद्धिप्रदा मता ।
अ(क)कारादिमहाभट्टारिका विद्याप्रकीर्तिता ।। ३६

*ऐं प्रोक्त्वोच्छिष्ट चांडाली मातङ्गीति पदं वदेत् ।
सर्व के(व)शंकरि प्रोक्त्वा स्वाहोच्छिष्टमतङ्गिनी ।। ३७

वाग्वादिनी च तत्पश्चात् नकुली तदनन्तरम् ।
कुमारीं प्रथमं प्रोक्त्वा हसखफ्रें ततश्चसौ(ततो हसौः)।।३८

स्तौं (स्हौः)श्रीरामसंप्रोक्त्वाऽऽनन्दनाथपदं वदेत् ।
श्रीपादुकां पूजयामि श्यामलाख्यातिपादुका ।। ३९

---

* ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि सर्वलोकवशंकरि उमुकं मे वशमानय स्वाहा सौः क्ली ऐं श्रीं ह्रीं ऐं (98 अक्षराणि)इति राजमातङ्गी मन्त्रः ।

श्यामलाष्टनवत्यर्णनायका(यिका) परिकीर्तिता ।
आ(लॄं) वाराहि पदं प्रोक्त्वा ईं(लॄं) प्रोक्त्वोन्मत्त भैरवी ।।

पादुकाभ्यां नमः प्रोक्त्वा लघुवार्तालिका मता ।
ओं(ऐं)ह्रीं नमोऽथवाराहि घोरे स्वप्नं च(ठ)युग्मकम् ।। ४१

स्वाहा च स्वप्नवाराही विद्या प्रोक्ता महेश्वरि ।
तारं नमो भगवति महामाये ततः परम् ।। ४२

पशु प्रोक्त्वा जन म न चक्षुती(स्ति)रस्क संवदेत् ।
रणं कुरुयुगं हुंफट् स्वाहान्तं मन्त्रमुच्यते ।। ४३

श्रीतिरस्करिणीविद्या पशूनां नेत्रनाशिनी ।
ऐं ग्लौं प्रोक्त्वा हसौ पश्चात् हसखफ्रें हसौः परम् ।। ४४

श्रीरामानन्दनाथ श्रीपादुकां पूजयामि च ।
पञ्चमीपादुकाख्याति विद्याप्रोक्ता महेश्वरि ।। ४५

---

* श्रीदत्त संहितायां इयं रश्मिमाला चिद्रश्मिशूक्तमिति नाम्ना षड्विंशेऽध्याये वर्णिता प्रसङ्गात् लिख्यते । ऋषय ऊचुः-

भगवन् करुणासिन्धो दत्तात्रेय जगद्गुरो ।
पार्वत्यै तत्रभवता शङ्करेणाखिलात्माना ।।
यदीरितं महद्गुह्यं देव्या पृष्टं च यद्रहः ।
तन्नः संश्रद्दधानानां व्याचक्ष्वास्माकमीश्वर ।।
यद्यनुग्राह्यताऽस्मासु यदि कारुण्यमस्ति ते ।
अवाच्यमपि तद्गुह्यं भगवन्नः समर्पय ।।
इति तैः प्रार्थितो विष्णुः दत्तात्रेयो जगद्गुरुः ।
महतीं संहितामेतां महर्षिभ्यः समूचिवान् ।।

द्वादशोर्ध्वं शतार्णा च महावाराहिका मता ।।
हसौश्च सहौं सहः(ह्सौः सहौंः)प्रोक्त्वा कएईल वदेत्ततः ।।४८

---

**दत्तात्रेय उवाच -**

शृणुध्वं बालका यूयं वसिष्ठाद्यास्तपोधनाः ।
पुरा युदुदितं देव्याः हरेण परमात्मना ।।
अहं व्याख्यातुमिच्छामि प्रयताः शृणुतादरात् ।
पार्वतीवचनैः शम्भुः परितुष्टः पुरान्तकः ।।
वचनैः सान्त्वयित्वा तां देवीं वक्तुं प्रचक्रमे ।

**महादेव उवाच -**

अयि धन्यतरे देवि भवत्या पृष्टमञ्जसा ।।
गुह्यं लोकोपकाराय पवित्रतममद्भुतम् ।
आवाच्यमपि वक्ष्यामि स्वयोनिमिव गोपय ।।
महतीयं पराकाष्ठा चिद्विद्या परमेश्वरि ।
अस्य मध्यस्थमखिलं पदवाच्यार्थलक्षणम् ।।
विश्वं समस्तमीशानि आत्मरूपाऽमृता हि सा ।
अध्यस्तस्याथ विश्वस्य महती त्रिपुरेश्वरी ।।
अधिष्ठानतया भद्रे संप्रोक्ताऽखिलकामधुक् ।
अत एवखिलानात्मसद्मनो मन्त्रसत्तमात् ।।
देवीस्वरूपात्तद्विश्वं पृथङ्नास्तीति निर्णयः ।
अस्यामेवाखिलर्थात्मरूपायां भुवनेश्वरि ।।
विद्याया अखिलं न्यस्तं विद्याजालं कुलाम्बिके ।
अहं समस्तविद्यानां दैवानां वचसामपि ।।
पुराणसंहितादीनां सारः सङ्गृह्यते शिवे ।
जामदग्न्यस्य रामस्य कुमारस्यापि चान्तिके ।।
सप्तकोटिमहामन्त्रानुदधृत्य निजरूपतः ।
तत्रास्याम्नायवर्गस्य क्रममुधृत्य शाम्भवम् ।।
सूक्तमुद्धृत्य तत् सूत्रे गुह्यं सर्वमवादिषम् ।
तद्यत्र संहितासारं वेदतन्त्रार्थगर्भितम् ।।

हसकहल संप्रोक्त्वा सकल ह्रीं चसंवदेत् ।
पूर्तिभट्टारिका विद्या प्रोक्ता देवि तव प्रिये ।। ४९

---

अधिकृत्योक्तसिद्धान्तं सर्वसिद्धान्तसङ्ग्रहम् ।
उद्धृत्याहं प्रवक्ष्यामि मानसोल्लासमद्भुतम् ।।
अस्मिन् हि मानसोल्लासे अज्ञातार्थाननेकशः ।
ज्ञातव्यं गुरुवक्त्रेण नान्यथा पातकी भवेत् ।
तत्र षण्मतमन्त्रोत्थसारं सूक्ष्मं महत्तरम् ।
रश्मिमालाभिधं सूक्तं श्रीश्रियः परमेश्वरि ।।
आवर्तनादस्य भवेदखिलाघौघसंक्षयः ।
समस्तवेदानुद्धृत्य फलमस्य स्मृतेर्भवेत् ।।
सप्तकोटिमहामन्त्रजपकोट्युद्भवं फलम् ।
सकृज्जपादस्य भवेदिति शास्त्रार्थनिर्णयः ।।
काश्याद्यखिलयात्रोत्थं वाजपेयादियागजम् ।
तुलापुरुषदानादिफलमस्य भवेज्जपात् ।।
देव्याःश्रीललिताम्बायाः कृत्स्नमन्त्रतनोः शिवे ।
यतो रश्मय आख्याता महामन्त्रा इमे ततः ।।
ततो रश्म्यभिधानेन महामन्त्रा इमे स्मृताः ।
चिद्विद्या जपकर्मादौ जप्तव्या रश्मिमालिका ।।
अजप्ता रश्मिमाला चेत् सद्यो भ्रश्यति चिन्मनुः ।
एकवारं द्विवारं वा त्रिवारं प्रातरम्बिके ।।
आचार्यचरणद्वन्द्वं नत्वा चिद्रश्मिमालिका ।
प्रजपादेष पन्थास्ते लोकानां च मयोदितः ।।
सकृज्जपन् रश्मिसूक्तं पापादिभयसङ्कटात् ।
विमुक्तः सकलान् कामान् प्राप्य साक्षच्छिवो भवेत् ।।
रश्मिसूक्ते महापुण्ये वसेत् षण्मतसङ्क्रमः ।
मतानि षड्विधानीह पुरा सिद्धानि वल्लभे ।।
प्रमाणलक्षणाभ्यां च भिन्नान्येतानि वै क्रमात् ।
मन्त्रदेवतयोर्भेदादिति शास्त्रार्थनिर्णयः ।।

त्रितारीं च कुमारीं च ऐं ग्लौं हसखसंवदेत् ।
फ्रें हसक्षमल प्रोक्त्वा वरयूमिति संवदेत् ।। ५०

---

अतश्चिद्रश्मिसूक्तस्य मध्ये षण्मतसंभवाः ।
मन्त्राःसन्ति यतस्तस्मान्मन्त्रसाम्राज्यनायिका ।।
चिद्विद्यैव महामन्त्ररत्नरत्नेश्वरी स्मृता ।
अतो मन्त्रेश्वरीमेनां जपन् सर्वमनुस्मृतेः ।।
लभेत्फलं ततो विद्या जप्तव्या साङ्गमन्वहम् ।
मनुक्रमं प्रयजता देवताशरणार्थिना ।।
ततश्चिद्रश्मिसूक्तेऽस्मिन् सर्वमन्त्रसमन्वयः ।
यतः षण्मतसंस्थानं तज्जपेत्सूक्तमन्वहम् ।।
इति श्रीदत्तात्रेयसंहितायां पञ्चविंशोऽध्यायः ।।

**महादेव उवाच -**

शृणुदेवि प्रवक्ष्यामि नामतो रश्मिमालिकाम् ।
माता समस्त देवानां आद्या गायत्र्युदीरिता ।।
अभयंकरविद्याऽथ सावित्र्यष्टाक्षरी परा ।
प्रणवाख्याऽथ गायत्री तुरीयाख्या कुलाम्बिके ।।
मूलहृत्फालकबिल द्वादशान्तेषु सुव्रते ।
बीजभूतमिदं विद्यापञ्चकं सर्वसिद्धिदम् ।।
ततश्चाक्षुष्मती विद्या ततो गन्धर्वनायिका ।
पथिषद्रुद्रविद्याथ तारा जलभयापहा ।।
नामत्रयमहाविद्या स्थानेषूक्तेषु पञ्चसु ।
ध्यायेत्परिकरत्वेन विद्यापञ्चकमिष्टदम् ।।
महागणपतेर्विद्या महेशद्वादशाक्षरी ।।
मृत्युञ्जयमहाविद्या विद्या धातुरतः परम् ।
पञ्चाशदक्षरी विद्या मातृकाख्याऽथ पञ्चमी ।।
स्थानेषु पञ्चस्वेतेषु रक्षाकर्य इमाःस्मृताः ।
विद्या परशिवस्याथ विद्या सम्पत्करी परा ।।

क्षमयेति पदं प्रोक्त्वा (सहक्षमल संप्रोक्त्वा)
वरईमिति संवदेत् ।

---

कालसंकर्षणी विद्या महाशाम्भव्यतः परम् ।
ततः परा कला विद्या रश्मिविद्या इमाः शुभाः ।।
अधिष्ठानतया ध्येयाः स्थानेषूक्तेषु पञ्चसु ।
ततः कुमारीविद्याख्या चान्नपूर्णा ततः परम् ।।
अश्वारूढा महाविद्या ततः श्रीगुरुपादुका ।
विद्याभिराभिः संयुक्ता चतुर्भिर्ब्रह्मरूपिणी ।।
नित्या सिह्मासनाम्नाय समयाश्चैव संयुता ।
मूलाधारे चिन्तनीया श्रीदेवी परदेवता ।।
लघुश्यामाभिविद्या विद्या विद्यावाग्वादिनी शुभा ।
विद्याऽथ नकुली श्यामा ततो देशिकपादुका ।।
चतुर्विद्याभिरेताभिः युक्ता श्रीमन्त्रिणी शुभा ।
स्वयंवराख्यमनुना युक्ता च श्रीपराम्बिके ।।
श्रीश्यामा हृदये ध्येया महासिद्धिप्रदायिनी ।
लघुकोलमुखी विद्या स्वप्नकोलमुखी तथा ।।
तिरस्करणवार्ताली वाराहीगुरुपादुका ।
चतुर्विद्याभिरेताभिः वनदुर्गाख्य विद्यया ।।
युक्ता बगलया तद्वत् जातवेदसविद्यया ।
महाकोलमुखी ध्येया कालचक्रे सनातनी ।।
स्वर्णाकर्षणविद्या च आपद्वदुक भैरवी ।
चिन्तामणि महाविद्या कामधेन्वभिधा ततः ।.
चतुर्विद्याभिरेताभिः युक्ता श्रीपरदेवता ।
श्रीपूर्ताख्या ब्रह्मबिले यष्टव्या च ततः परम् ।।
गुरोर्गुरोः परस्यापि गुरोश्च परमेष्ठिनः ।
परापराख्यस्य गुरोः चतुर्विद्याभिरन्विता ।।
महाश्रीपादुका ध्येया द्वादशान्ते ततः परम् ।
श्रीरश्मिमालिकापूर्णगात्रः इत्थं शिवो भवेत् ।।
इरि त्रिपुर भैरव्यौ तथा संहार भैरवः ।।

हसौदश्चहसौदश्च (हसौं: श्च सहौंश्च)
श्रीरामानन्दसंवदेत् ।। ५१

---

रक्ताभिधाना योगिन्यःसारसश्च ततः परम् ।
चामुण्डेति चिदम्बाया विघ्नदेव्यः षडीरिताः ।
(१. इरि मिलि किरि किलि परिमिरों ।
२. ओं ह्रीं नमो भगवति महात्रिपुरभैरवि मम त्रैपुररक्षां कुरुकुरु ।
३. संहर संहर विघ्नरक्षोविभीषकान् कालय हुंफट् स्वाहा ।
४.ब्लूं रक्ताभ्यो योगिनीभ्यो नमः ।
५. सं सारसाय बह्वशनाय नमः .।
६. दुमुलु षुमुलु षुं ह्रीं चामुण्डायै नमः इति विघ्नदेवी मन्त्राः षट् श्रीललिता चिदम्बायाः ।।)
हसन्ती श्यामला विघ्नदेव्येका संप्रकीर्तिता ।
स्तम्भिनी नाम वार्तालीविघ्नदेवी प्रकीर्तिता ।
समस्त विघ्नाशमनी भूतविद्याप्रकीर्तिता ।।
(हसन्ति हसितालापे मातङ्गि परिचारिके मम भयविघ्नापदां नाशं कुरु कुरु ठः ठः हुं फट् स्वाहा इति श्यामलायाः, तं स्तम्भिन्यै नमः इति वार्ताल्याश्च विघ्नहरे विद्ये ।।
१ अ आ ए कचटतप यष प्राणशक्ति श्रीपादुकां पू
२ इ ई ऐ ख छ ठ थ फ रक्ष अग्नि शक्ति ...........
३ उ ऊ ओ गजडदब ल ळ इलाशक्ति श्री ........
४ ऋ औ घ झ ढ ध भ व स अम्बुशक्ति श्री ........
५ लृ लॄ अं अः ङ ञ ण न म श ह खशक्ति श्री .....
इति पञ्चभूतविद्याः । एता दुर्लभाविद्याः गोप्या अपि साधक-हिताय प्रकाश्यन्ते)
सप्तकोटि महामन्त्रा अपि श्रीरश्मयः स्मृताः ।
तत्रावयवभूतास्तु श्रियोऽमी रश्मयः शिवे ।।
ब्राह्मे काले समुत्थाय स्मृत्वादौ देशिकं विभुम् ।
ब्राह्मे समय उत्थाय चिन्तयेदादितः शुचिः ।।

नाथश्रीपादुकां प्रोक्त्वा पूजयामीति संवदेत् ।
पादुकाश्रीमहाख्यातिविद्या देवि प्रकीर्तिता ।। ५२

---

वेदाः सर्वे सेतिहासाःसागमाः शास्त्रसञ्चयाः ।
भूताद्यखिलविद्याश्च सूक्ततन्मनवश्च ये ।।
सप्तकोटिमहामन्त्राः अपि सर्वे च रश्मयः ।
समस्तविद्यासम्राज्ञी श्रीविद्यातः प्रकीर्तिता ।।
ब्राह्मे समय उत्थाय स्मृत्वा प्रत्यहमादरात् ।
एकधा वा द्विधा त्रेधा चतुर्धा पञ्चधापि वा ।।
साक्षाद्ब्रह्मयो भूत्वा भवेत्परशिवात्मकः ।
पञ्चधा प्रत्यहं रश्मिसूक्तं स्मर्तव्यमादरात् ।।
चतुर्धा वा त्रिधा द्वेधा सकृद्वा नियतः स्मरेत् ।
दक्षिणामूर्तिमीशानं स्मृत्वा गुरुतरं गुरुम् ।।
आचार्यपादुकामन्त्रं स्मरेत्पश्चादनुक्रमात् ।
भगवान् दक्षिणामूर्तिर्मुनिरस्याः प्रकीर्तितः ।।
गायत्र्यादीनि छन्दांसि सर्वविद्यामयी परा ।
श्रीदेवी देवता प्रोक्ता महात्रिपुरसुन्दरी ।।
सर्वश्रेयः श्रीसिध्यर्थे विनियोग उदाहृतः ।
असङ्ख्यातमहः पुञ्जपिञ्जरीकृतविग्रहाम् ।।
रश्मिमालामहं वन्दे महात्रिपुरसुन्दरीम् ।
ध्यात्वेत्थं प्रजपेद्देवीं नित्यं चिद्रश्मिमालिकाम् ।
अहोरात्रगतैः पापैः तत्क्षणादेव मुच्यते ।।
वारद्वयमनुस्मृत्य रश्मिमालां दिनेदिने ।
आजन्मसञ्चितैः पापैः मुक्तो ब्रह्ममयो भवेत् ।।
वारत्रयमनुस्मृत्य प्रत्यहं रश्मिमालिकाम् ।
सप्तजन्मशतैर्मुक्तो महापापोपपातकैः ।।
ब्रह्मानन्दमयं धाम देहान्ते प्रविशत्यसौ ।
चतुर्वारमनुस्मृत्य श्रीदेवीरश्मिमालिकाम् ।।

षड्विघ्नदेवताः पश्चात् प्रोक्तव्या मन्त्रवित्तमैः ।
रश्मिमाला भवेदेषा तत्पश्चाच्चक्रमालिनी ।। ५३

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
एकोनाशीतितमोऽध्यायः ।।



---

सर्वविद्यानिधिर्भूत्वा सकलैश्वर्यसंयुतः ।
सपुत्रपौत्रसम्पत्तिसहितः सर्वभाग्यवान् ।
चिरायुरिह भोक्ताथ दिव्यान्भोगांश्च मानुषान् ।।
साक्षान्नारायणो भूत्वा भवेत्परशिवः स्वयम् ।
श्रीदेवीरश्मिविद्याभिः पूर्णगात्रो दिने दिने ।।
परब्रह्ममयो भूत्वाचिन्मयो नित्यशुद्धिभाक् ।
परसंविन्मयो विद्यातपस्तेजोमयः प्रभुः ।।
जीवन्मुक्तो भवत्येव नात्रकार्या विचारणा ।
इति श्रीदत्तसंहितायां षड्विंशोऽध्यायः ।।]

## ।। अशीतितमोऽध्यायः ।।

त्रितारीं च कुमारीं च श्रीरामानन्द संवदेत् ।
श्रीपादुकां पूजयामि रामानन्दमनुर्भवेत् ।। १

अष्टाविंशतिवर्णं च गणेशस्य मनुं यजेत् ।
रक्तद्वादश तत्पश्चात् शक्तियुक्ताय संवदेत् ।। २

दीपनाथाय संप्रोक्त्वा नमो मन्त्रं जपेद्बुधः ।
ह्लां ह्लीं ह्लूं ह्लैं ततो ह्लौं च ह्लः प्रोक्त्वा तदनन्तरम् ।। ३

महाकालाय संप्रोक्त्वा हुंफट् अ(हु)त्या युतं जपेत् ।
त्रितारीं च कुमारीं च वसन्तेति वदेत्ततः ।। ४

नाथाय हुंफण्णत्या च युतं मन्त्रं ततो जपेत् ।
त्रितारादींश्च षड्बीजं क्रममादि(वर्षर्तु च) ततो वदेत् ।।

नाथाय हुंफडं तस्मान्नमसा तु महेश्वरि ।
शरदश्च हिम प्रोक्त्वा शिशिरर्तु ततो वदेत् ।। ७

एवं षडृतुमन्त्रं तु प्रजपेन्मन्त्र वित्तमः ।
तत्त्वस्यात्तु(?) महाश्यामां मृत्युञ्जयमतः परम् ।। ८

मातृकां प्रजपेत्पश्चात् कालसङ्कर्षणीं ततः ।
ऊँ ह्लीं त्वनन्तनाथेति नाथाय नम इत्यपि ।। ९

अनन्तमन्त्रं जप्त्वा तु गायत्रीं प्रजपेत्ततः ।
यत इन्द्रेत्यादि मन्त्रं जप्त्वा वैश्वानरेति च ।। १०

जातवेदपदं प्रोक्त्वा साय स्वाहा मनुं जपेत् ।
यमं चेति ऋचं जप्त्वा तत्पश्चात् वरुणं जपेत् ।। ११

सहखिप्रेर्महानीलाय (?) हुं प्रोक्त्वा फडित्यपि ।
स्वाहा वायुमनुं जप्त्वा कुबेरं प्रजपेत्ततः ।। ११

राजाधिराजायेत्यृचं पथिषद्रुद्रमर्णकम् ।
महावाराहिकां पश्चात् धारणा ब्रह्ममन्त्रकम् ।। १२

ॐ ह्रीं हिरण्यगर्भेति पुरुषाय पदं ततः ।
प्रधानाव्यक्तसंप्रोक्त्वा रूपिणे पदमुद्धरेत् ।। १३

ओं नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ।
स्वाहा मन्त्रं जपेद्विद्वान् अथ पञ्चदशाक्षरीम् ।। १४

ताराविद्यां जपेत् पश्चात् वारुणीं तदनन्तरम् ।
ॐ ह्रीं वां च समुद्धृत्य वारुण्यै स्वाहया युतम् ।। १५

षड्बीजं त समुद्धृत्य कुरुकुल्ये ततः परम् ।
हुं फट् स्वाहान्तकं मन्त्रं प्रजपेन्मन्त्रवित्तमः ।। १६

मार्ताण्डभैरवं जप्त्वा ह्रां ह्रीं ह्रूमादिमन्त्रकम् ।
नमो भगवति प्रोक्त्वा दीर्घमायुं(?)समुद्धरेत् ।। १७

मन्त्रं जप्त्वा महेशानि तत्पश्चात् काममन्त्रकम् ।
तारं क्लीं च समुद्धृत्य कन्दर्पाय ततो वदेत् ।। १८

स्वाहा मनुं जपित्वा तु अन्नपूर्णां ततः परम् ।
वाग्वादिनीं ततो जप्त्वा आगमन्त्रै(?)पुनर्जपेत् ।। १९

षड्बीजं पूर्वमुद्धृत्य ..................................
यं हुं फट् नमस्सं प्रोक्त्वा तु शम्भुनाथं ततः परम् । (?)
हे सखिप्रें(हसखफ्रें) समुद्धृत्य श्रीं ह्रीं ऐं ततो वदेत् ।। २१

ब्लूं श्रीं जुं स इति प्रोक्त्वा अमृते अमृतोद्भवे ।
अमृतेश्वरि संप्रोक्त्वा अमृतवर्षिणि तत्परम् ।। २२

अमृतं प्रा(स्रा)वय युगं स्वाहांमन्त्रं जपेत्ततः ।
पूर्तिभट्टारिकां जप्त्वा तत्पश्चात्ख्यातिपादुकाम् ।। २३

ककारादि हकारादिमहाभट्टारिकां जपेत् ।
एवं श्रीचक्रवालीं च ततश्चक्रेण संयुताम् ।। २४

यष्ट्वा जप्त्वा ततः पश्चात् वारुणीं प्रजपेद्बुधः ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
अशीतितमोऽध्यायः ।।



## ।। एकाशीतितमोऽध्यायः ।।

सुधासूक्तं प्रवक्ष्यामि सुश्रोणि शृणु सुन्दरि ।
समुद्रे मथ्यमाने तु क्षीरोदे सागरोत्तमे ।। १

तत्रोत्पन्नां सुधादेवीं कन्यकारूपधारिणीम् ।
अष्टादशभुजां देवीं रक्तामायतलोचनाम् ।। २

त्रिणेत्रां दीर्घतन्वङ्गीं कालाग्निसदृशप्रभाम् ।
मण्डलं वेष्टयित्वा तु फेनामृतविभूषणाम् ।। ३

गोमूत्रक्षीरवर्णां गां बहुरूपां सुधां परम् ।
भासयन्ती सुरान्नित्यं देवानाभभयंकरी ।। ४

या सुधा सा महादेवी योऽमरस्तु सुरेश्वरः ।
यो वर्णः स भवेद्ब्रह्मा यो गन्धः स जनार्दनः ।। ५

स्वादौ तु संस्थितः सोमः यो वेगः सोऽनिलः स्मृतः ।
ध्याने च संस्थितः सूर्यः स च ब्रह्मां(?) हुताशनः ।। ६

ईक्षया मनये देवो(?)पालयेत्तु च भैरवः ।
तदाह्लादे परा शशि (क्ति) रानन्दो मोक्ष उच्यते ।। ७

इच्छायां मन्ममथो देवः लालने रुरुभैरवः ।
द्रव्यं गङ्गा समाख्याता घतस्तत्सप्तसागराः (?) ।। ८

द्रव्ये त्वं सुखरूपासि (?)त्रैलोक्यप्रियं वदे ।
ऐह्येहि वारुणीदेवि महाशुद्धिं कुरु प्रिये ।। ९

सर्वमन्त्तरमयि देवि सुधादेवि नमोऽस्तु ते ।
आणवादिपशुपाश लो (मो)चनी-
मात्मवैभवसुखप्रदायिनीम् ।
गद्यपद्यमयवाग्विलासिनी-
मद्य तां परमेश्वरीं भजे ।। १०

इति पुष्पाक्षतान्क्षिप्य धेनुमुद्रां प्रदर्श्य च ।
प्राप्ते स्वीकरणे काले वदेत् श्लोकत्रयं बुधः ।। ११

इदं पवित्रममृतं पिबामि भवभेषजम् ।
पशुपाशसमच्छेदकारणं भैरवोदितम् ।। १२

चित्ते स्वातन्त्र्यसारत्वात् तस्या ननु मयं त्वतः (?)
तन्मयत्वाच्च भावानां भावाश्चान्तरिता रसे ।। १३

स्वस्वातन्त्र्यविकासाय सुरसस्तेन पीयते (?)
तस्मादिमां सुरादेवीं पूर्णाहन्तां पिबाम्यहम् ।। १४

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
एकाशीतितमोऽध्यायः ।।



## ।। द्व्यशीतितमोऽध्यायः ।।

**देव्युवाच-**

नमस्तेऽस्तु महादेव सर्वविद्यास्वरूपिणे ।
पञ्चागमनां मन्त्रान्मे तत्तद्ध्यानपुरःसरम् ।। १

अङ्गन्यासेन ऋष्यादीन् सारमुद्धृत्य संवद ।

**ईश्वर उवाच -**

शृणु देवि विशालाक्षि महाभागे महाप्रिये ।। २

मम प्राणाधिके देवि सर्वलोकसुखप्रदे ।
पूर्वाम्नायाद्यागमेषु मन्त्रमेकं जपेद्यदि ।। ३

पशुपाशविनिर्मुक्त इह सिद्धिमवाप्य च ।
देहान्ते मोक्षमाप्नोति .................... ।। ४

भोगमोक्षमिह प्राप्य य जीवेत् शरदां शतम् ।
प्रथमा शुद्धविद्या तु द्वितीया बालिका भवेत् ।। ५

द्वादशार्धा तृतीया स्यात् चतुर्था श्रीमतङ्गिनी ।
पूर्वाम्नाये मिलित्वा तु गिरिः कामगिरिर्भवेत् ।। ६

चतुर्विंशतिसाहस्रं गुरुपीठान्तकं भवेत् ।
शुद्धविद्यामनोर्देवि सदाशिव ऋषिः स्मृतः ।। ७

छन्दो गायत्रमाख्यातं शुद्धविद्यामनोन्मनी ।
देवता बीजमैं शक्तिः ईं औं कीलकमीरितम् ।। ८

मोचनार्थे पशुत्वस्य नियोगस्तुवरानने ।
ऐं ईं औरिति देवेशि षडङ्गन्यासमाचरेत् ।। ९

शुद्धस्फटिकसङ्काशां शुद्धविद्यां महेश्वरीम् ।
पुस्तकं चाक्षमालां च ज्ञानमुद्रामभीतिकाम् ।। १०

धारयन्तीं वरारोहां पशुपाशविमोचनीम् ।
सर्वमन्त्रप्रकाशां च मातृकारूपमास्थिताम् ।। ११

मनोन्मनीं महाभागां ध्यात्वा मन्त्रं जपेद्बुधः ।
तारं वाग्भवमुच्चार्य ईं औरिति मनुर्भवेत् ।। १२

लक्षमात्रं जपेन्मन्त्रं सर्वसिद्धिं समश्नुते ।
ऋषिस्तु दक्षिणामूर्तिर्बालामन्त्रस्य सुन्दरि ।। १३

छन्दोगायत्रमाख्यातं बालाम्बा देवता मता ।
ऐं बीजं क्लीं ततः शक्तिः सौः कीलकमितीश्वरि ।। १४

बालाप्रसादसिध्यर्थे सर्वसिध्यै नियोगकम् ।
बीजत्रयेण देवेशि करन्यासं समाचरेत् ।। १५

आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डं जपा-
बन्धूकप्रसवारुणांबरधरां प्रेतासनाध्यासिनीम् ।
तां ध्यायन्ति चतुर्भुजां त्रिणयनां आपीनतुङ्गस्तनीं
मध्ये निम्नवलित्रयाङ्कितततनुं तद्रूपसंवित्तये १६

ऐं क्लीं सौ रिति मन्त्रः स्यात् विलोमेनापि सुन्दरि ।
पुरश्चर्या त्रिलक्षं स्यात् भोगमोक्षं समश्नुते ।। १७

श्रीद्वादशार्धमन्त्रस्य परमानन्दभैरवः ।
ऋषिश्छन्दस्तु गायत्रं द्वादशार्धाम्बिका मता ।। १८

देवता बीजशक्ती च कीलकं च त्रिखण्डकम् ।
प्रसाद सिध्यै योगस्तु सम्पत्तिसिद्ध्यै महेश्वरि ।। १९

षट्पदेन षडङ्गं स्यात् पश्चाद्ध्यायेन्महेश्वरीम् ।
द्वादशार्धां महादेवीं बन्धूकप्रसवारुणाम् ।। २०

पाशाङ्कुशौ धारयन्तीं अक्षमालां च पुस्तिकाम् ।
पुण्ड्रेक्षु चापपुष्पेषुवरदाभयधारिणीम् ।। २१

चन्द्रचूडां त्रिणयनां पञ्चवक्त्रविभूषणाम् ।
शिवस्याङ्के समासीनां ध्यात्वा मन्त्रं जपेद्बुधः ।। २२

हसकलरडैं तु सं प्रोक्त्वा हसकल(र)डीं वदेत्ततः ।
हसकलरडौं ततः पश्चात् तद्विलोमो मनुर्भवेत् ।। २३

त्रिलक्षं सिध्यै तु प्रजपेत् साधको मन्त्रमुत्तमम् ।
राजमातङ्कीमन्त्रस्य महामतङ्गेश्वरो ऋषिः ।। २४

पङ्क्तिश्छन्दो महादेवि श्यामला देवता मता ।
क्लीं बीजं ह्रीं ततः शक्तिः कीलकं श्रीः समीरीतम् ।। २५

राजवश्ये नियोगस्तु सर्वश्येऽपि सुन्दरि ।
न्यासं पूर्ववदाख्यातं ध्यानं वच्मि शृणुष्वत् ।। २६

ध्यायेयं रत्नपीठे शुककलपठितां शृण्वतीं श्यामगात्रीं
न्यस्तैकाङ्घ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम् ।

कल्हाराबद्धमालां त्रिणयनविलसच्चूलिकां रक्तवस्त्रां
मातङ्गीं शङ्खपात्रां मधुमदविवशां चित्रकोद्भासिमालाम् ।।

[1]जपेदष्टनवत्यर्णं मन्त्रं सर्वार्थसाधकम् ।
सप्तविंशति वर्णं वा त्रिखण्डं तु त्रिबीजकैः ।। २८

को वा वर्णयिता मन्त्रवैभवं परमेश्वरि ।
प्रणवं च त्रितारं च तारं ह्रीमिति संवदेत् ।। २९

पूर्वाम्नाय पदं प्रोक्त्वा समयेति पदं वदेत् ।
विद्येश्वरी श्रीपादुकां पूजयामीति संवदेत् ।। ३०

उद्दिष्टेयं महादेवि पूर्वाम्नायस्य पादुका ।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
द्वाशीतितमोऽध्यायः ।।



---

1. ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति श्रीराजमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखरञ्जिनि क्लीं ह्रीं श्रीं सर्वराज वशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि सर्वजनं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं ।

## ।। त्र्यशीतितमोऽध्यायः ।।

आम्नायं दक्षिणं वक्ष्ये सावधानमनाः शृणु ।
सौभाग्या प्रथमा ज्ञेया वाराही च द्वितीयका ।। १

आपदुद्धारकः पश्चात् श्रीतिरस्करिणी ततः ।
मिलिता पञ्चमी ज्ञेया दक्षिणाम्नाय देवताः ।। २

त्रिंशत्सहस्रकैर्युक्ताः पूर्णपीठे स्थिताः सदा ।
भैरवादिपदद्वन्द्वपर्यन्तं परिकीर्तितम् ।। ३

सौभाग्याम्बामनोर्देवि ऋषिरानन्दभैरवः ।
छन्दो गायत्रमाख्यातं सौभाग्याम्बा तु देवता ।। ४

ऐं बीजं क्लीं ततः शक्ति सौः कीलकमितीरितम् ।
नानाऽभीष्टार्थसिध्यर्थे विनियोगो वरानने ।। ५

सर्वज्ञाद्यैः षडङ्गं स्यात् करन्यासमपि प्रिये ।
कुङ्कुम पंकि(पङ्क) समाभासं(समाभां)
साङ्कुशपाशेक्षुचापकुसुमशराम् ।
पंक(ङ्क)जमध्य विषणां(निषण्णां)
पङ्केरुहलोचनां परामहं वन्दे ।। ६

काये( क ए) ईलेति ह्रीं पूर्वं हसक(ह)ल तत्परम् ।
ह्रीं सकलपदं प्रोक्त्वा ह्रीं मूलं परिकीर्तितम् ।। ७

आगमे ज्ञेयमम्बा नां (या) चक्रयोगादिकं परम् ।
भूवराहस्तु वाराह्या ऋषिर्मन्त्रस्तु(स्य)पार्वति ।। ८

छन्दस्तु जगती प्रोक्ता वाराही देवता मता ।
ईं द्लौं (ग्लौं)बीजमयीं(ऐं) ततः शक्तिः
*कीलकं सौः प्रकीर्तितम् (?) ।। ९

तत्प्रसादाप्तये योगः षडङ्गं पूर्ववद्भवेत् ।
दंष्ट्रोज्ज्ल्त्पोत्रिमुखार विन्दां
कोटीरसंभिन्न हिमांशुरेखाम् ।। १०

नागं कपालं दधतो(दधतीं) कराभ्यां
.................. मुसलेष्टदौ च ।
कृष्णांशुकारक्तकसोत्तरीयां
प्रवालकर्णाभरणां त्रिणेत्राम् ।। ११

श्यामां समस्ताभरणां सृ(स्र)गाढ्यां
वाराहि संज्ञां प्रणमामि नित्यम् ।।
(शङ्खं चक्रं मुसमभयं दक्षिणाभिः सुदोर्भिः
शङ्खं खेटं हलमथ वरं बिभ्रतीं वामदोर्भिः ।
सिह्मासीनां अयुगनयनां श्यामलां कोलवक्त्रां
वन्दें देवीं सकलफलदां पञ्चमीं मातृमध्ये ।।) १२

तारं नमो भगवति ओं ऐं ग्लौमितिपूर्वकम् ।
शेषं सर्वं पूर्ववत्स्यात् योगश्चक्रं तदागमे ।। १३

---

* नित्योत्सवे वाराही(दण्डिनी) मन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः श्री महावाराही देवता । ऐं ग्लौं बीजम् फट् शक्तिः ठः ठः ठः ठः कीलकम् । अभीष्टार्थे विनियोगः इति । न्यासे विशेषः तद्ग्रन्थादवगन्तव्यः ।

आपदुद्धारणमनोः ऋषिः स्कन्दो महेश्वरि ।
छन्दोऽनुष्टुप् तथाख्यातं देवता भैरवो मतः ।। १४

वं बीजं ह्रीं ततः शक्तिः ब्लूंकीलकमितीरितम् ।
सर्वार्थसिध्यै योगस्तु ह्रां वामाद्यैः षडङ्गकम् ।। १५

फणिं डमरुकं पाशं अङ्कुशं दण्डमेव च ।
अमृतं कलशं चैव वरदाभयधारिणम् ।। १६

(शुद्धस्फटिकसङ्काशं सहस्रादित्यवर्चसम् ।
नीलजीमूतसङ्काशं नीलाञ्जनसमप्रभम् ।। १७

अष्टबाहुं त्रिणयनं चतुर्बाहुं द्विबाहुकम् ।
दंष्ट्राकरालवदनं नूपुरारावसङ्कुलम् ।। १८

भुजङ्गमेखलं देवमग्निवर्णशिरोरुहम् ।
दिगम्बरं कुमारेशं वटुकाख्यं महाबलम् ।। १९

खट्वाङ्गमसिपाशं च शूलं दक्षिणभागतः ।
डमरुं च कपालं च वरदं भुजगं तथा ।। २०
अग्निवर्णसमं वन्दे सारमेयसमन्वितम् )

श्रीतिरस्करिणीदेव्या अदृश्याव्यक्तसंज्ञकः ।। २१

ऋषिश्छन्दस्तु गुप्तिः स्यात् तिरोधाना तु देवता ।
श्रीं ह्रीं क्लीमिति बीजादिकीलकान्तं महेश्वरि ।। २२

तत्प्रीतये नियोगस्तु ह्रामित्यादि षडङ्गकम्
नीलाश्ववर्यमधिरुह्य सुशोभयन्ती
नीलाम्बराभरणमाल्यविलेपनाढ्या ।

निद्रावशेन भुवनानि निरोदधाना
खड्गायुधा भगवती परिपातु भक्तान् ।। २३

*त्रितारीं च कुमारीं च तारं पूर्वं समुद्धरेत् ।
तारं नमो भगवति तिरस्करिणि तत्परम् ।। २४

सकलेति जनं प्रोक्त्वा मोहिनीपशुसंवदेत् ।
जन प्रोक्त्वा मनश्चक्षूंषिति रस्करणं कुरु ।। २५

कुरुस्वाहा कुमारीं च त्रितारेण मनुर्भवेत् ।
तारं त्रितारमुद्धृत्य ॐ ऐं क्लीं नति क्लीं वदेत् ।। २६

मदद्रवे कुले प्रोक्त्वा हसौरिति पदं ततः ।
दक्षिणाम्नायसमय विद्येश्वरि पदं ततः ।। २७

श्रीपादुकां पूजयामि दक्षिणाम्नायपादुका ।
भैरवादीन् समारभ्य पदद्वन्द्वं तु पादुका ।। २८

आम्नाये दक्षिणे देवि तत्पश्चात्पश्चिमं भवेत् ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
त्र्यशीतितमोऽध्यायः ।।



---

* तिरस्करिणीमन्त्रोद्धारः नित्योत्सवादि ग्रन्थान्तरात् भिद्यते । गुरुक्रमः एव आदरणीयः ।

## ।। चतुरशीतितमोऽध्यायः ।।

लोपामुद्रा तु पूर्वा स्यात् द्वितीया भुवनेश्वरी ।
अन्नपूर्णा तृतीया स्यात् ततः कामकला भवेत् ।। १

पञ्चमी पादुका ज्ञेया स्थिता जालन्ध्रपीठके ।
दूत्यादीनां चतुः षष्टिः सिद्धानां तु सहस्रकम् ।। २

आम्नांयं पश्चिमं देवि सर्वकामार्थसाधकम् ।
लोपामुद्रामनोर्देवि ऋषिरानन्दभैरवः ।। ३

छन्दो गायत्रमाख्यातं लोपा(मुद्रा) तु देवता ।
ह्रीं ऐं क्लीं बीजशक्त्या(द्यं) सम्पत्तिसिध्यै नियोगकम् ।। ४
*हसहकल(हसकल ह्रीं हसकहल ह्रीं) युग्मं तु
सकलेति वदेच्च ह्रीम् ।। ४

लोपामुद्रामहामन्त्रः सर्वसिद्धिप्रदायकः ।। ५

भुवनेश्वरी(श्वर्या हि) मन्त्रस्य वेदव्यास ऋषिः स्मृतः ।
छन्दोऽनुष्टुप् समाख्यातं देवता भुवनेश्वरी ।। ६

ह्रीं कारेण तु बीजादि योगः सर्वार्थसिद्धये ।
ह्रामित्यादि षडङ्गं स्यात् पश्चाद् ध्यायेन्महेरीम् ।। ७

उद्यद्भास्वत्समाभां विजितनवजपामिन्दुचूडा न(नु) बद्धां
ज्योतिर्मौलिं त्रिणेत्रां विविधमणिलसत्कुण्डलां पद्मसंस्थाम् ।

---

* हसकलह्रीं हसकहलह्रीं सकलह्रीं इति मन्त्रस्वरूपम् ।

हारग्री(ग्रै)वेयकाञ्चीगुणमणिवलयैः द्यौ(याद्यैः)विचित्राम्बराढ्यां
अम्बां पाशाङ्कुशेष्टाभयवरकरा(ऽभयकरकमलां)अम्बिकां तां
नमामि ।। ८

श्रीं ह्रीं श्रीं मूलमन्त्रः स्यात् सर्वसिध्येककारणम् ।
सदाशिवो (व)ऋषिस्त्वन्नपूर्णामन्त्रस्य पार्वति ।। ९

छन्दो जगतिराख्याता अन्नपूर्णा तु देवता .
ओं क्लीं सौः बीजशक्ती च कीलकं परिकीर्तितम् ।। १०

अन्नसिद्दिः(द्ध्यै) नियोगस्तु ह्रामित्यादि षडङ्गकम् ।
उद्यत्सहस्रद्युतिबिम्बगौरा-
मुत्तुङ्गपीनस्तनलम्बहाराम् ।
मणिक्यदर्वीमधुपात्रहस्तां
ध्यायेच्च देवीं स्मरवैरिकान्ताम् ।। ११

तारं नमो भगवति ओं ह्रीं श्रीं क्लीं च पूर्वकम् ।
माहेश्वरीत्यन्नपूर्णे ममाभिलषितं ततः ।। १२

अन्नं देहि स्वहया च युतो मन्त्रः प्रकीर्तितः ।
ऋषिः कामकलायास्तु मन्मथो जगती ततः ।। १३

छन्दः कामकला प्रोक्ता देवता बीजमीरितम् (मीमिति)
ह्रीं क्लीं शक्त्यादिकं देवि नियोगः सिद्धये भवेत् ।। १४

ह्रामित्यादि षडङ्गं स्यात् ईं सर्वत्र नियोजयेत् ।
पङ्कजपाशेक्षुचापां
किंशुकमाल्या गृहं च(ल्यां च पञ्च) बाणधराम् ।

कङ्कणवराभयहस्तां
कलये कामकलाधरामम्बाम् ।। १५

ईं ह्रीं क्लीमिति संप्रोक्त्वा कएईलद्वयं वदेत् ।
सकलेति ततः पश्चात् ह्रीमन्तं मन्त्रमुद्धरेत् ।। १६

स्मरणान्मन्त्रराजस्य सर्वान् लोकान् वशे भवेत् ।
(सर्वो लोको वशे भवेत् ।)
तारं त्रितारमुच्चार्य ऊँ हस्त्रैः इति संवदेत् ।। १७

ह श्रीं (स्त्रां) द्वयं ततो हस्त्रौः हसखफ्रें अनन्तरम् ।
सौः (हसौः)प्रोक्त्वा भगवत्यम्बे(म्ब)हसक्षमल संवदेत् ।।१८

वरयूमिति संप्रोक्त्वाह्यसुखर्प्रे(हसखफ्रें) द्वयं वदेत् ।
अघा(घो)रे द्वयमुच्चार्य अघोरमुखि तत्परम् ।। १९

झ्रीं छ्रीं किणिद्वयं विच्चे हसौः हसखफ्रें द्वयम् ।
श्रीसहस्त्रं च हस्त्रं च(?)पश्चिमाम्नाय संवदेत् ।। २०

समा(म)येति पदं प्रोक्त्वा विद्येश्वरी ततः परम् ।
श्री पादुकां पूजयामि मन्त्रोऽयमखिलार्थदः ।। २१

दूत्यादिकं समारभ्य चतुष्षष्ट्यन्तमीश्वरि ।
पादुकायजनं कुर्यात्सर्वसौभाग्यवृद्धये ।। २२

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
चतुरशीतितमोऽध्यायः ।।



## ।। पञ्चाशीतितमोऽध्यायः ।।

तुरीया वाच(म्बा च)पु(पू)र्वास्यात् महार्था(र्धा)च ततः परम्।
अश्वारूढा च वि(मि) श्राम्बा तथा वाग्वादिनी ततः ।। १

देवताद्विसहस्रेण युक्ताश्चोड्याण पीठकाः (गाः) ।
मुद्रादिकं समारभ्य वीरावल्यन्तकं भवेत् ।। २

तुरीयाम्बा मनु(नो)र्देवि भोगानन्दाख्य भैरवः ।
ऋषिश्छन्दस्त्वनुष्टुप् स्यात्तुरीयाम्बा तु देवता ।। ३

ह्लीं श्रीं क्लीं इति बीजादित्रयं योगस्तु सिद्धये ।
मायाबीजत्रयेणापि तथा खण्डत्रयेण च ।। ४

करन्यासं षडङ्गं च कृत्वा ध्यायेन्महेश्वरि ।
पञ्चबाणां (श्च) च पुण्ड्रेक्षु चापं सुदधतीं करैः ।। ५

भूषितं (तां) पुष्पजालैश्च तुरीयाम्बां सदा भजेत् ।
हसकह(हसकल)लद्वयं प्रोक्त्वा सकलां(ल)ह्रीं मनुर्भवेत् ।।

सर्वसिद्धिप्रदादेवीमन्त्रो मोहनदो नृणाम् ।
महार्थ(र्धा)मन्त्रराजस्य जिताका (तका)शो(श)ऋषिःस्मृतः।।

आनन्द भैरवा(वो) देवि छन्दोऽतिजगती मता ।
महार्धाम्बा महादेवि देवता परिकीर्तिता ।। ८

ऐं बीजं ईं ततः शक्तिः कीलकं सौः प्रकीर्तितम् ।
मना(ममा) भीष्टार्थ सिध्यर्थे योगस्त्वङ्गं षडङ्गकैः (?)

आधारेअरुणार्कबिम्बवदने अत्युग्रदंष्ट्रान्त(ध)रे
वीणानादम(?) नन्तनिलये वीणादिगान प्रिये ।
नानावर्णमये नरास्छिललितः(स्थिकलित) सुव्यक्तमालाधरे
श्रीविद्येत्वरिते महार्धमहिमे श्रीशाङ्करित्वम्बिके (?) १०

ऐं ईं रिति(ईमिति) संप्रोक्त्वा कये(ए)ह्लीं ईलेति ह्रीं ततः ।
सकल ह्रीं च सं प्रोक्त्वा सृष्टि नित्यै(त्ये) ततः परम् ।।११

स्वाहा हं स्छि(स्थि)तिपूर्णेति नमः(:)ह्रीं च महावदेत् ।
संहारिणि कृशे प्रोक्त्वा चण्डकाली(लि)प(फ)डित्यपि ।।१२

रिहिसुफ्रीं(रं हसखफ्रें)महानंते(नाख्ये)ततश्चानन्द(न्त)भास्करीं(रि)
चण्डकाली(लि)फडित्येवं रुं(रं) महासं समुद्धरेत् ।। १३

हारिणी(णि)चण्डकालीतिफट्हंस्छि(स्थि)तिसमुद्धरेत् ।
पूर्णे न व(म)श्च सं सृष्टि नित्यै(त्ये)स्वाहा मनु भ(र्भ)वेत्।।१४

अश्वारूढामनोर्देवि ऋषिः स्वच्छन्दभैरवः ।
छन्दो गायत्रमाख्यातं अश्वारूढा तु देवता ।। १५

आं बीजं ह्रीं ततः शक्तिः कीलकं क्रों समीरितम् ।
सिद्धये विनियोगस्तु आं ह्रीं क्रों अङ्गमम्बिके ।। १६

---

अत्र ध्यानश्लोके मन्त्रवर्णेषु च अशुद्धिः दृश्यते । मातृकान्तर-दौर्लभ्यात् यथाशक्ति शोधितम् । रश्मिमाला मन्त्रजालान्तर्गत-कालसङ्कर्षणी विद्यागता बहवो वर्णाः मन्त्रभागाश्च अत्रापि दृश्यन्ते

अश्वारूढा कराग्रे नवकनकमयीं वेत्रयष्टिं दधाना
दक्षेऽन्येनाऽऽनयन्ती स्फुरति(स्फुरित)तनुलता पाशबद्धा सुसाध्या।
[1]देवी नित्यं प्रसन्ना शशमध विलसन् केशपादां त्रिनेत्रां
दद्याद(दा)द्याऽनवद्यां [2]सरलमु(सु)खफलप्राप्तिहृद्यां श्रियं नः ।।

आं ह्रीं क्रोमेहि प्रोक्त्वा परमेश्वरि तत्परम् ।
स्वाहा मन्त्रमिति प्रोक्तं सर्वसिद्धिप्रदायकम् ।। १८

मिश्राम्बामन्त्रराजस्य सदाशिव ऋषिः स्मृतः ।
छन्दो गायत्रमाख्यातं मिश्राम्बा देवता मता ।। १९

त्रितार्या बीजशक्त्यादि भवेद्देवि नियोगकम् ।
सर्वसिध्यै षडङ्गं स्यात् त्रितार्या तु महेश्वरि ।। २०

[3]ऐंकारे विद्रुमाभे अहरहमहिमे आदिमूलस्वरूपे
आहाहिहे हरात्मे अमृतवर्षे दे अन्नमन्नादिरूपे ।
ह्रीं कारे शक्तिमूले इहपरमहिमे ईक्षणख्यातरूपे
नामाद्ये नाथनाथे नमनममहिमे नाद नादात्ममिश्रे ।। २१

मूलं वाग्भवबीजं स्यात् वाक्सिद्धिप्रदमम्बिके ।
वाग्वादिनी नमो(मनोः) देवि दक्षिणामूर्तिरुच्यते ।। २२

ऋषिश्छन्दस्तु गायत्री देवता वाग्विभूतिदा ।
शेषं पूर्ववदाख्यातं तत्कल्पे समुदीरितम् ।। २३

---

1. देवी नित्यं प्रसन्ना सकलशुभकरी सा त्रिणेत्राभिरामा
2. शशिशकलधरा
3. पद्यमिदं शोधनीयम् ।

तारं त्रितारीमुच्चार्य ओं प्रं प्रोक्त्वामहापदम् ।
चण्डयोगेश्वरि प्रोक्त्वा उत्तराम्नाय संवदेत् ।। २४

ततः सामयसे(समय सं) प्रोक्त्वा विद्येश्वरि ततः परम् ।
श्रीपादुकां पूजयामीति पादुकामनुरीरितः ।। २५

मुद्रादिकं समारभ्य वीरावल्यन्तमर्चयेत् ।।

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
पञ्चाशीतितमोऽध्यायः ।।



## ।। षडशीतितमोऽध्यायः ।।

परामन्त्रस्य देवेशि चिद्रूपानन्द भैरवः ।
ऋषिस्तु जगती छन्दः श्रीपरा देवता मता ।। १

[1]संबीजं सैं ततः शक्तिः कीलकं सं प्रकीर्तितम् ।
सिद्धये विनियोगः स्यात् सामित्यादि षडङ्गकम् ।। २

चतुर्बाहां महादेवीं चापबाण धरां शिवाम् ।
वरदाभयसंयुक्तां परां ब्रह्मस्वरूपिणीम् ।। ३

ध्यात्वा मन्त्रं जपेद्विद्वान् सर्वसिद्धिं समश्नुते ।
मन्त्रः सौः परमेशानि सर्वसिद्धिप्रदायकः ।। ४

पराशाम्भवी मन्त्रस्य ऋषिश्छन्दश्चपूर्ववत् ।
शाम्भवी देवता प्रोक्ता ह्रीं बीजं परिकीर्तितम् ।। ५

श्रीं ऐं शक्तिः कीलकं च त्रितारेण षडङ्गकम् ।
माया कुण्डलिनी क्रिया वसुमती काली कलामालिनी
मातङ्गी विजया जया भगवती वन्दे शिवा शाम्भवी ।
शक्तिः शङ्करवल्लभा त्रिणयना वाग्वादिनी भैरवी
ह्रीङ्कारी त्रिपुरा परापरमयी माता कुमारीत्यसि ।। ६

तारं त्रितारमुच्चार्य हिंसुफ्रिं(हस्ख्फ्रें ह्रीं) समुच्चरेत् ।
सौः श्रीह(श्रीं हुं)इति मन्त्रः(:)स्यात् सर्वसिद्धिप्रदायकः ।।
आरभ्य मालिनीं पूर्वं मण्डलान्तं भजेद्बुधः ।
पश्चादनुत (प)रादेवी त्रिपुरा ब्रह्मरूपिणी ।। ८

---

1. स्बीजमौ ततः शक्तिः विसर्गः कीलकं मतमिति क्वचित्तालपत्रात्मक-एतन्मन्त्रप्रकाशकमातृकायां दृष्टमस्माभिः । अस्मद्गुरूपदेशश्चैवमेव ।।

शक्तिविद्यामयी देवी सर्वसौभाग्यदायिनी ।
विद्याश्रीषोडजशार्णस्य ऋषिरानन्दभैरवः ।। ९

छन्दो गायत्रमाख्यातं देवता त्रिपुरेश्वरी ।
बीजत्रयं बालया च सर्वसिध्यै नियोगकः(:) ।। १०

पूर्ववत् (च)षडङ्गं स्यात्सर्वज्ञाद्यादिमार्गतः ।।

सिद्धसिद्धतररत्नभूमिके
कल्पवृक्षवनवाटिसंवृते ।
रत्नजालवलयैर्निषेविते
तत्र वापिशतकेन संकुले ।। ११

नीपवाटि मणिमण्टपे तरुण-
चण्डभानुशत भासुरे शुभे ।
पाशबाण धनुरङ्कुशान्वित-
पाणिमङ्घ्रिविलसत्सुनूपुराम् ।।

आदिपञ्चशिवमञ्चके शिवे
शङ्कराङ्गमणिपीठिकास्थिताम् ।
कादि हादिमनुरूपिणीं शिवां
भवयामि परदेवतामहम् ।। १२
(संस्मरेत् त्रिपुरसुन्दरींपराम्)

लक्ष्मीश्च खण्डानि पुरे श्वराया-
स्तार्की(र्ती)यबीजाद्यवरोहतो मनुः ।। १४

त्रिपुराषोडशार्णोऽयं सर्वसिद्धिप्रदायकः ।
श्रीषोडाशार्णमन्त्रेण तुल्योऽयं परमेश्वरि ।। १५

[1]श्रीं खण्डं विपरीतेन योजयित्वा महेश्वरि ।
श्रीमन्त्रवन्महेशानि बीजान्यादौ तथान्त्यमे ।। (?) १६

उद्धरेत् त्रिपुरामन्त्रं षोडशार्णं भविष्यति ।
पूर्वाम्नायादिदीक्षां च पूर्वं लब्ध्वा यथा क्रमम् ।। १७

त्रिपुराषोडशार्णान्तं लब्ध्वा गुरुमुखाम्बुजात् ।
अनुत्तरां महालक्ष्मीं श्रीविद्यां ब्रह्मरूपिणीम् ।। १८

श्रीसर्वदीक्षां संप्राप्य लभेत्साधकपुङ्गवः ।
सर्वसिद्धिं समाश्रित्य देहान्ते श्रीमयो भवेत् ।। १९

इति सङ्क्षेपतः प्रोक्तं पञ्चाम्नायं महेश्वरि ।
पञ्चाम्नाय परिज्ञानं नाल्पस्यतपसः फलम् ।। २०

जन्मान्तरसहस्त्रेषु तपोध्यानसमाधिमान् ।
आम्नायपञ्चके मन्त्रं एकं जानाति साधकः ।। २१

एकमन्त्रपरिज्ञानात् आगमेषु महेश्वरि ।
सौभाग्यमिह संप्राप्य देहान्ते मोक्षमाप्नुयात् ।। २२

एकस्य वा परिज्ञाने तस्य जन्मान्तरं नहि ।
तस्माद्दीक्षां विधानेन गृह्णीयात्साधकोत्तमः ।। २३

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
षडशीतितमोऽध्यायः ।।



---

1. पराषोडशीमन्त्रोऽत्र उल्लिख्यते - श्रीं सौः क्लीं ऐं ह्रीं ओं ह्रीं श्रीं विलोमतः खण्डत्रयं ततः ह्रीं ऐं क्लीं सौः श्रीं इति मन्त्रस्वरूपम् ।

## ।। सप्ताशीतितमोऽध्यायः ।।

**देव्युवाच**

मत्प्राणनाथ हे शम्भो सर्वमन्त्रार्थविग्रह ।
नमस्ते परमेशान नमो विद्यास्वरूपिणे ।। १

पञ्चागमेषु संप्रोक्ताः श्रीनाथाद्याश्च पादुका(:) ।
तत्सर्वं मे समाचक्ष्व मयि यद्यस्ति ते कृपा ।। २

**ईश्वरः**

शृणु देवि प्रवक्ष्यामि गोप्याद्‌गोप्यतरं परम् ।
पादुकानां क्रमं वक्ष्ये तव स्नेहान्मम प्रिये ।। ३

श्रीनाथादि गुरुत्रयं पदयुगं दूतीक्रमं मण्डलं*
वीराद्‌व्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ।। ४

स्वगुरुं प्रथमं पूज्य तत्पश्चात् परमं गुरुम् ।
परमेष्टिगुरुं पश्चात् पूजयेद्‌गुरुमन्त्रतः ।। ५

गुरु मन्त्रस्य देवेशि परब्रह्मा ऋषिस्स्मृतः ।
छन्दो गायत्रमाख्यातः (तं)स्वगुरुर्देवता मतः ।। ६

हं बजं सः(सस्ततः) स्ततः शक्तिः सोऽहं कीलकमीरितम् ।
गुरुप्रसादे योगस्तु हंसामित्यादि षडङ्गकम् ।। ७

---

* श्रीनाथादि गुरुत्रयं गणपतिं पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूती क्रमं मण्डलम् ।। इति प्रसिद्धः पाठः ।

वन्दे गुरुपदद्वन्द्वं वाङ्मना(नोऽ)तीतगोचरम् ।*
रक्तशुक्लप्रभामिश्रं अतर्क्यं त्रैपुरं महः ।। ८

त्रितारीं च कुमारीं च हंस शब्दं समुद्धरेत् ।
शिवःसोऽहं तदन्ते स्यात् स्वरूपेति पदं ततः ।। ९

निरूपणपदं प्रोक्त्वा हेतवेति पदं ततः ।
स्वगुरवे पदं पश्चात् नमसा मन्त्र मुद्धरेत् ।। १०

गुरुनाथं समुद्धृत्य पादुकां पूजयामि च ।
गुरुमन्त्रोऽयमाख्यातः सर्वसिद्धिप्रवर्तकः ।। ११

परमस्य गुरोर्देवि ऋषिः प्रोक्तः सदाशिवः ।
पङ्क्तिश्छन्दो देवता स्यात् परमो गुरुरीश्वरि ।। १२

अन्यत्सर्वं पूर्वत्स्यात् मन्त्रं वच्म्यवधारय ।
त्रितारीं च कुमारीं च तदन्ते सोऽहमेव च ।। १३

हंसः शिव य(इ)ति प्रोक्त्वा स्वच्छ शब्दं समुद्धरेत् ।
प्रकाशेति पदं पश्चात् विमर्शेति च हेतवे ।। १४

परमेति पदं पश्चात् गुरवेनम उद्धरेत् ।
शेषं पूर्ववदाख्यातं परमेष्टी(ष्टिं) वदामि ते ।। १५

ऋषिस्तु दक्षिणामूर्तिः परमेष्टी(ष्टिं)गुरोस्ततः ।
छन्दो गायत्रमाख्यातं अन्यं(त्) सर्वं च पूर्ववत् ।। १६

---

* "वन्दे गुरुपदद्वन्द्वमवाङ्मनस गोचर"मिति पाठः प्रसिद्धः ।

त्रितारीं च कुमारीं च हंसः शिवः(:) समुद्धरेत् ।
सोऽहं हंस इति प्रोक्त्वा स्वात्मारामेति संवदेत् ।। १७

परमानन्दसंप्रोक्त्वा पश्चात्पं च(ज)र संवदेत् ।
विलीन तेजसे प्रोक्त्वा परमेष्ठी(ष्ठि) पदं ततः ।। १८

गुरवे नम उच्चार्य शेषं पूर्ववदुद्धरेत् ।
गुरुत्रयमहामन्त्रा उद्दिष्टा(:) परमेश्वरी(रि) ।। १९

महागणपतिः पश्चात् पूजनी या (यः) स्वमन्त्रतः ।
गणाधिनाथकल्पे तु प्रोक्तं स्मर महेश्वरि ।। २०

यजेत्पिंड(पीठ)त्रयं पश्चात् स्वस्वमन्त्रेण सुन्दरि ।
कामश्रीगिरिपीठस्यात् (पीठस्य)
ऋषिर्ब्रह्मा समीरिता(तः) ।। २१

छन्दो गायत्रमाक्यातं देवता कामपीठकः ।
अं बीजं जं ततः शक्तिः कीलकं ल्की(क्लीं)समीरितम् ।।

सिद्धये विनियोगः स्यात् ह्रामित्यादि षडङ्गकम् ।
ब्रह्मात्मशक्तिसहितमरुणं कामसंज्ञितं(ज्ञकम्) ।। २३

गिरिपीठमहं वन्दे सर्वसिद्धिप्रदायकम् ।
तारं त्रितात(र) मुद्धृत्य कुमारीं च ततः परम् ।। २४

अं आं सौरिति संप्रोक्त्वा कामरूपेति संवदेत् ।
पीठायेति ततो(नमो)ब्रह्मा चाम(चात्म)शक्ती(क्ति)ततो वदेत्।।

श्रीपादुकां पूजयामि मन्त्रोऽयमखिलार्थदः ।
श्रीपूर्णगिरिपीठस्यात्(स्य)ऋषिर्विष्णुः समीरितः ।। २६

छन्दोऽनुष्टुप् देवता स्यात् श्रीमन्नारायणी परा ।
काममाया(ये)बीजशक्ति(क्ती)सिद्धये तु नियोगकम् ।। २७

श्रीमित्यादि करन्यासं षडङ्गं च समाचरेत् ।
भूयाद्भूयोद्विपत्नेति ध्यायेल्लक्ष्मीं महेश्वरि ।। २८

मायां लक्ष्मीं परां प्रोक्त्वा कामं वाग्भव बीजकम् ।
पूर्णे(ति)गिरिमुच्चार्य पीठायेति ततः परम् ।। २९

विष्ण्वात्मशक्ति संप्रोक्त्वा श्रीपर्व(पूर्वं) पादुकां वदेत् ।
पूजयामीति मनत्रेण पूजयेत् पूर्ण पर्वतम् ।। ३०

व्या(जा)लंध्रपीठमन्त्रस्य ऋषि(षी)रुद्रः प्रकीर्तितः ।
छन्दोऽतिजगती प्रोक्ता श्रीगौरी देवता मता ।। ३१

बीजं परातु शक्तिश्च वाग्बीजं ह्लीं च कीलकम् ।
सिध्यर्थे विनियोगस्तु बालया च षडङ्गकम् ।। ३२

आधारे अरुणेत्यादि ध्यानं तस्याः प्रकीर्तितम् ।
कुमारी(रीं) प्रथमं प्रोक्त्वा श्रीमायाभै(मैं)समुच्चरेत् ।। ३३

जाला(लं)ध्रपीठाय ततोरुद्रश्क्तयै ततोद्धरेत् ।
श्रीपादुकां पूजयामि मन्त्रोऽयमखिलार्थदः ।। ३४

कालाग्निरुद्रो देवेशि भैरवाणामृषिः स्मृतः ।
छन्दो गायत्रमाख्यातं भैरवा देवता मताः ।। ३५

हं हुं फडिति बीजादित्रयं कुर्याद्विचक्षणः ।
सिद्धये विनियोगस्तु वामित्यादि षडङ्गकम् ।। ३६

[1]करकलीतमित्यादि ध्यानं देवि प्रकीर्तितम् ।
[2]फ्रें फं(?)फां फीं समुच्चार्य ह्रीं श्रीं मूलं समुद्धरेत् ।। ३७

मंडनं(मन्थानं)त्वथ चक्रं च फट्कारं पंचदः फलं (?)
एकात्मभैरवः (वं)पूज्य रविभक्षमनन्तरम् ।। ३८

श्रीचक्र भैरवं पश्चात् नभोनिर्मलसंज्ञि(ज्ञ)कम् ।
समर(डमरं) भास्करं पश्चात् पूजयेत् पूर्वमन्त्रतः ।। ३९

सिद्धानां च मनोर्देवि ऋषिरानन्द भैरवः ।
अव्यक्तं छन्द इत्युक्तं श्रीसिद्धा देवता मता ।। ४०

अं बीजं आं ततः शक्तिः कीलकं ईं प्रकीर्तितम् ।
दीर्घस्वरीः(रैः) षडङ्गं स्यात् योगः सर्वार्थसिद्धये ।। ४१

कपालं बिन्दुमुद्रां च वरदाभयहस्तकाः (:) ।
ध्येयाः सिद्धा महाभागाः सुप्रसन्नाः सुखप्रदाः ।। ४२

---

1. करकलित कपालः कुण्डली दण्डपाणिः
तरुण तरणिनीलः व्यालयज्ञोपवीती ।
क्रतुसमयसपर्या विघ्नच्छेदहेतुः
जयतिवटुकनाथः सिद्धिदः साधकानाम् ।

2. भैरवाणां मन्त्र स्वरूप प्रकारः इत्थं - ओं ऐं ह्रीं श्रीं - फ्रें फट् फां फीं ह्रीं श्रीं महामन्थान भैरव श्रीपा. पूजयामि नमः
ओं ऐं ह्रीं श्रीं फ्रें फट् फां फीं ह्रीं श्रीं चक्रभैरव श्री पा. पू. नमः
,, ,, ,, ,, फट् कारभैरव श्री. पा.पू. नमः
,, ,, ,, ,, एकात्मान्दभैरव श्री. पा. पू. नमः
,, ,, ,, ,, रविभक्षणभैरव श्री. पा. पू. नमः
,, ,, ,, ,, नभोनिर्मलभैरव श्री. पा. पू. नमः
,, ,, ,, डमर भास्करभैरव श्री. पा. पू. नमः

माया लक्ष्मीः पराबीजं मन्त्रः स्यात् परमेश्वरि ।
आदौ मन्त्रं समुच्चार्य तत्तन्नाम्ना समर्चयेत् ।। ४३

महादुर्मन सिद्धं च सुन्दर्यम्बा क्य(ख्य)सिद्धये(कम्)
श्रीविश्वदल शक्त्यंबासिद्धं पश्चात् समर्चयेत् ।। ४४

करा(पा)लिकाम्बासिद्धं च चिबिड(बडबा)म्बाख्यमेव च ।(?)
भीमाम्बासिद्धमभ्यर्च्य कराळ्यम्बाख्यमेव च ।। ४५(?)

करानन्नी(ना)म्बा सि द्विं(द्धं) च पूजयेत्साधकोत्तमः ।
विशालानाम्बा सिद्धं च पादुकामन्त्र ता(कैः) यजेत् ।। ४६

वटुकत्रयमन्त्रस्य ऋषिर्ब्रह्मा समीरिता(तः) ।
छन्दो गायत्रमाख्यातं देवताः स्युस्त्रिमूर्तयः ।। ४७

षडशश्च तु अहंसं(?) बीजं ते परिकीर्तितम् ।
सरस्वती महालक्ष्मी(:) गौरी शक्तिर्यथाक्रमात् ।। ४८

त्रितारं कीलकं प्रोक्तं सिद्धये तु नियोगकम् ।
फामित्यादि षडङ्गं स्यात् ध्यानं वच्मि शृणु प्रिये ।। ४९

वरदाभयहस्तं च अक्षमालां कमण्डलुम् ।
वटुकं प्रथमं वन्दे वाग्देवीसहितं प्रभुम् ।। ५०

शङ्खचक्रधरं देवं चापबाणैरलङ्कृतम् ।
ध्यायेच्चित्रं च वटुकं श्रियायुक्त(क्तं) सुयौवनम् ।। ५१

शूलं डमरुकं चैव वरदाभयपाणिकम् ।
गौरि(री)देव्या समायुक्तं ध्यायेद्रौद्रं महास्वनम् ।। ५२

ह्रीं श्रीं हुं फट् मनुर्देवी(वि) यजेच्च वटुकत्रयम् ।
स्कन्दं विचित्रवटुकं विरिच्यं (विरिञ्चिं) च यजेत्क्रमात् ।।

पदयुगमनोर्देवि दत्तात्रेयो(य) ऋषिः स्मृतः ।
छन्दोऽनुषुट्टुप् पदयुगो देवता परिकीर्तिता ।। ५४

हं बीजं सस्ततः शक्तिः सोहं कीलकमुच्यते ।
सिद्धये तु रि(नि)योग) स्यात् षडङ्गं च त्रिखण्डकैः ।।५५

*पिज(शिञ्जन्) नूपुरइत्यादि ध्यानं पदयुगस्य तु ।
हसकालेर्ती (हसकलेति) ह्रीं पूर्व(र्वं)
सकहल (हसकहल) तत्परम् ।। ५६

ह्रीं द्वितीयं च सकल ह्रीं तृतीयं प्रकीर्तितम् ।
हसकलेति संप्रोक्त्वा हंसकहल तत्परम् ।। ५७

सकल श्रीं (ह्रीं) समुच्चार्य यजेत्पदयुगे (गं) सुधीः ।
प्रकाशपादविमर्शपाद इत्येव युग्मकम् ।। ५८

नवदूत्यास्तु मन्त्रस्य मन्मथो ऋषि रुच्यते ।
छन्दो गायत्रमाख्यातं नवदूत्यस्तु देवताः ।। ५९

अं बीजं क्लां(आं)ततः शक्तिः कीलकं ऊँ(सौः)समीरितम् ।
सिद्धये विनियोगस्तु अं आं सौश्च षडङ्गकम् ।। ६०

---

* शिञ्जन्नूपुरपादकंकण महामुद्रासुलाक्षारसा-
लङ्काराङ्कितं अङ्घ्रि पङ्कजयुगं श्रीपादुकालंकृतम् ।
उद्भास्वन्नखचन्द्रखण्डरुचिरं राजज्जपासन्निभं
ब्रह्मादित्रिदशार्चितं पदयुगं मूर्ध्नि स्मराम्यम्बिके ।।

योनिमुद्रां च सव्ये तु वरदाभयहस्तकाः
दक्षिणे पानपात्रं च धारयन्ती (:) सदा भजे ।। ६१

अं आं सौः ह्लां(ह्लीं) ततः श्रीं च सौर्मनुः परमेश्वरि ।
योन्यम्बादूतिकां पूज्य योनि सिद्धामतः परम् ।। ६२

महायोनिं दिव्यनोनिं संपूज्य परमेश्वरि ।
योनिसिद्धां दिव्यपूर्व शङ्खयोनिमतः परम् ।। ६३

शङ्खयोनिं तथा सिद्धनाथाम्बादूतिमेव च ।
पद्मयोनिं ततः पश्चात् सिद्धदूतीपुरःसरम् ।। ६४

मण्डलत्रयमन्त्रस्य सोमसूर्याग्नयो ऋषिः (!)
गायत्री च तत स्त्रिष्टुप् छन्दोऽनुष्टुप् प्रकीर्तितम् ।। ६५

सोमादयो महादेवि देवताः परिकीर्तिताः ।
सं घ्रं(घृं) रं चेति बीजं स्यात् शक्ति श्चैव कलात्रयम् ।।

अं आं ॐ इति संप्रोक्त्वा कीलकं न्यासमाचरेत् ।
क्षीरोदार्णवसंभूतं शशिनी (नं) सर्वकामदम् ।। ६७

स्रवन्तममृतं नित्यं स्वकलाभिर्वृतं भजे ।
आदित्यं सर्वकर्तारं स्वकलाभिः समावृतम् ।। ६८

पद्महस्तद्वयं वन्दे सर्वलोकैकसाक्षिणम् ।
सदाशिवप्रियं रौद्रं सप्तास्यं सर्वतोमुखम् ।। ६९

वन्दे तं शिखिनं नित्यं हव्यकव्यवहं मुदा ।
ओं ह्लीं श्रीं ऐं ततो ह्रीं च क्लीं ह्लीं श्रीं समुद्धरेत् ।। ७०

सौश्च ह्रीं मनुराख्यातो मण्डलत्रय देवताः (?) ।
श्री वीराणां च मन्त्रस्यात्(मन्त्रस्य) परमानन्दभैरवः ।। ७१

ऋषिश्छन्दस्तु गायत्री देवता वीरभैरवः ।
तारं बीजं च ह्रीं शक्तिः कीलकं सं प्रकीर्तितम् ।। ७२

सिद्धये विनियोगस्तु भामित्यादि षडङ्गकम् ।
खड्गकेटधरावीरा वरदाभयहस्तकाः ।। ७३

ध्येयात्यन्तं(ध्येया नित्यं) महारौद्रा सर्वविघ्ननिवारकाः ।
मायां लक्ष्मीं समुद्धृत्य [1]फं फं (?) फीं मनुरीरितः ।। ७४

प्रथमं सृष्टिवीरं च स्थिति वीरमतः परम् ।
सर्वत्रवीरशब्दः स्यात् तदन्ते भैरवेति च ।। ७५

संहार रक्ष्यवीरं च यमवीरं ततः परम् ।
मृत्युवीरं भद्रवीरं परमार्कं ततः परम् ।। ७६

मार्ताण्डवीरं कालाग्नि रुद्रवीरं प्रपूजयेत् ।
श्रीचतुष्षष्टि सिद्धानां मन्त्रस्य तु सदाशिवः ।। ७७

ऋषिष्छन्दस्तु गायत्री सिद्धा देवेशि देवताः ।
बालयाचैव बीजादित्रयं योगस्तु सिद्धये ।। ७८

ऐं आं च हृदि विन्यस्य क्लीं ईं शिरसि विन्यसेत् ।
सौः [2]अ(ऊं)न्यस्य शिखायां तु ऐंक्लीं च(?)कवचं न्यसेत्।।

---

1. फट् फां फें मनुरीरितः
2. अत्र न्यास प्रकाशनमशुद्धमसङ्गतं च प्रतिभाति। सौः ऊं शिखायां, ऐं ऐं कवचे क्लीं औं नेत्रत्रये सौः अः अस्त्रे च विन्यासः एव सङ्गतः प्रतीयते ।

नेत्रत्रयेषु(तु)क्लीं ऐं च(?)अस्त्रं सौः हः(?)परि(प्र)कीर्तितः।
[1]मधुपात्रेषु संयुक्ता बिन्दुमुद्रेण संयुता ।। ८०

[2]तारं त्रितारमुच्चार्य कामं कामं लक्ष्मीं(च)ह्लीं पराम् ।
श्रीं ह्लीं इति समुद्धृत्य यजेत्सिद्धान् महेश्वरि ।। ८१

पूर्व(र्वं) मङ्गल नाथश्च चौ(चं)डिका नाथ तत्परम् ।
वेष्टंश्च(ज्येष्ठं च) कंतुकीनाथ पटहानाथ एव च ।। ८२

कूर्मश्च धनदानाथ गन्धनाथश्च तत्परम् ।
मातं का(गा)ह्वं पकः पूज्य (चम्पकं च)
कैवर्तश्च ततः परम् ।। ८३

[3]मातङ्ग ग ग(म) नानाथ सूर्यभक्षस्त्वनन्तरम् ।
नभो भक्षस्थितास्छौतीका(?)नाथे रूपिकः स्मृतः ।। ८४

---

1. ध्यान श्लोकः सावशेषः अशुक्ध)श्च दृश्यते ।

2. सौभाग्यचिन्तामणिमनुसृत्य मद्रास् नगरस्थ पणायूर श्रीनारायणशास्त्रि षष्ट्यब्दपूर्ति महोत्सवसमितिप्रकाशिते श्रीमहात्रिपुरसुन्दरी पूजाकल्पाभिधाने ग्रन्थे तु एवं :-

   ओं ऐं ह्लीं श्रीं ऐं ह्लीं श्रीं (त्रितार्या वारद्वयकथनं) क्लीं ह्लीं श्रीं सौं श्रीं ह्लीं मङ्गलनाथ ... इति सर्वत्र ।

3. वसुभक्षनाथेति नभोभक्षस्थाने, सौत्रिकानाथ, रुणिकानाथ, दंष्ट्रानाथ, धूम्राक्ष, ज्वालानाथ, गान्धारनाथ इति पूर्वोक्त त्रिपुरसुन्दरीपूजाकल्पान्तर्गतषडाम्नाय प्रकरणे ।

[1]दष्टः पूज्यश्चधूम्राक्ष ज्वालो गान्धार एव च ।
गगनेश्वर नाथश्च मायानाथस्ततः परम् ।। ८५

महो मायश्च नित्यश्च शान्तो विश्वश्च कामनः ।
उमानाथ प्रियानाथ सुभगानाथ एव च ।। ८६

[2]माया लक्ष्मी तथा विद्या मीननाथश्च तत्परम् ।
अमृतश्चण्डनाथश्च अन्तरिक्षश्च तत्परम् ।। ८७

सिद्धश्रद्धा अनन्तश्च [3]शंवरोल्का ततः परम् ।
त्रैलोक्यनाथो भीमश्च राक्षसे(सी) नाथ एव च।। ८८

मलना(मलिना) च प्रचण्डा च अनङ्गो विधिरप्यथ
अभिहिता नन्दिनी च ततस्त्वभि महामनाः ।। ८९

सुन्दरी चैव विश्वेश काल पश्चान्महेश्वरि ।
महाकालो महादेवि तत्पश्चादभयो मतः ।। ९०

विकारनाथश्च महाविकारश्च [4]सृकालकः ।
पूतः [5]शार्वरिनाथश्च [6]योमनाथ(?) स्ततः परम् ।। ९१

---

1. महोमाय इति तत्र म दृश्यते, अशुद्धः पाठ इति च भाति । मायानाथेत्यनन्तरं नित्यानाथेत्येव तत्र दृश्यते । 4. प्रियानाथेति एतदनन्तरं विद्यानाथ अमृतानाथ चन्द्रानाथेति तत्र दृश्यते।

2. महालक्ष्मी........ 3. शबरोल्का ........

4. सृकालक इति शोधनार्हः पाठः ।

5. शर्वरीनाथ 6. व्योमनाथ

[1]एवं क्रमेण यजनं नामान्ते नाथ संवदेत् ।
पूजयामीति सर्वत्र पादुकाविधिपूर्वकम् ।। ९२

मुद्रानरक(नवक) मन्त्रस्य भैरवोऽष्ट (?)ऋषिर्मतः ।
छन्दोऽनुष्टुप् महादेवि परमानन्द भैरवः(वी) ।। ९३

देवता ऐं तु बीजं स्यात् सौः क्लीं शक्तिश्च कीलकम् ।
[2]द्राविण्यादि(?) महाबाणैर्बालयाच षडङ्गकम् ।। ९४

शूलपत्राभयवरः सर्वाभरण भूषिताः ।
सर्वे(सर्व) शान्तिकरा नित्या मुद्राणामधिदेवताः ।। ९५

[3]द्रां द्रीं क्लीं ल्ब्यूं(ब्लूं)ततः सश्च ऐं क्लीं सौश्चेति मन्त्रकम्।
सर्वसंक्षोभणादीनामुद्दिष्टं परमेश्वरि ।। ९६

वीरावलीमनोर्देवि ऋषिर्ब्रह्मादिपञ्चकः (कम्) ।
छन्दो गायत्रमाख्यातमावली देवता मता ।। ९७

लं वं रं यं च हं बीजं तत्पश्चाच्छक्तिरुच्यते ।
सरस्वतीमहालक्ष्मीरुमा गौरी मनोन्मनी ।। ९८

सोऽहं कीलकमित्युक्तं सिद्धये तु नियोगकम् ।
ब्रह्मादयश्च पञ्चैते चतुर्बाहुसमन्विता (:) ।। ९९

---

1. सर्वत्र नामोच्चारणपूर्वकं नाथश्रीपादुकां पूजयामि इति यजनम् ।
2. द्रामित्यादि ।
3. सर्वासङ्क्षोभिण्यादि मुद्रानवक मन्त्राः शोधनमर्हन्ति । द्रां द्रीं क्लीं ब्लूं सः क्रों हस्ख्फ्रें ह्सौं ऐं इत्येव तत्तन्मुद्राप्रदर्शनावसरे मन्त्राः उच्यन्ते ।

तत्तदायुध संयुक्ता ध्यातव्या सर्वभाविनी(ना) ।
त्रितारी च कुमारी च मनुर्देवि प्रकीर्तिता(तः) ।। १००

ब्रह्मा विष्णुश्चरुद्रस्च ईश्वरश्च सदाशिवः ।
एतत्पञ्चावली(ज्ञेया)तत्पश्चान्मालिनी मता ।। १०१

ब्रह्मा मालिनिमन्त्रस्य ऋषिर्देवी(वि) प्रकीर्तिताः (तः) ।
छन्दो गायत्रमाख्यातं मालिनी देवता मता ।। १०२

हं बीजं सस्ततः शक्तिः सोऽहं कीलकमीरितम् ।
दीर्घस्वरैः षडङ्गं स्यात् योगः सर्वार्थसिद्धये ।। १०३

पञ्चाशद्वर्णभैदैश्च ध्यानं देवी(वि) प्रकीर्तितम् ।
मन्त्रस्तु मातृका प्रोक्ता [1]मन्त्र राजस्तु देवता ।। १०४

[2]ह्लां ह्लीं ह्लं (ह्लूं) बीजमित्यादि ह्लामित्यादि षडङ्गकम् ।
उग्र(ग्रं)वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।। १०५

भयमे (नृसिह्मं) भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ।
महाविषट्कमंत्रे स्यात् मन्त्रराजोऽयमम्बिके (?) ।। १०६

उग्र(गुरु) मण्डलमन्त्रस्यात्(स्य) ऋषिर्ह(र्हं)सः प्रकीर्तितः ।
छन्दोगायत्रमाख्यातं देवतागुरुमण्डलम् ।। १०७

ऐं ह्रीं क्लीं इति बीजादि बालाहंसेन चाङ्गकम् ।
श्रीनाथादि महेशानि ध्यानं संपरिकीर्तितम् ।। १०८

---

1. "मन्त्रस्तु मातृका प्रोक्ता" इत्यनन्तरं मन्त्रान्तर देवताकथनं मातृकायां दृश्यते । एतदनुसृत्य च मन्त्रान्तर बीजशक्त्यादि कथनं मेव दृश्यते । अवशिष्टः पाठः अन्यतो ज्ञेयः ।

2. नृसिह्ममन्त्रस्य ऋष्यादिकं - प्रसिद्धमन्यत्र न दृश्यते मातृकायाम् ।

आदौ संयोजयेद्विद्वान् श्रीमत्पञ्चदशाक्षरम् ।
हंसश्चेति मनुर्देवि मण्डलस्य प्रकीर्तितः ।। १०९

आत्मानन्दं तु संपूज्य परमानन्दमेव च ।
शाम्भव्या(वा)नन्दनाथं च चिन्मुद्रानन्दमेव च ।। ११०

वाग्भवानन्द नाथं च श्रीकण्ठानन्दमेव च ।
सम्भ्रमानन्दनाथं च चिदानन्दं ततः परम् ।। १११

प्रसन्नानन्द नाथं च पूजयामीति मन्त्रतः ।
आदिनाथानन्दनाथं पूजयेन्मूर्ध्नि सुन्दरि ।। ११२

एवं संपूज्य देवेशि पश्चादाम्नाय पादुका ।
परापरं परं चापि विद्यायाश्च परम्परा ।। ११३

लोपामुद्रा महादेव्याः पारम्पर्यं च तत्परम् ।
एवं जप्त्वा महादेवि पराचरणवासना ।। ११४

श्रीविद्याचरणस्यपि वासना तत्परं भवेत् ।
लोपामुद्रामहादेव्याः पश्चाच्चरण वासना ।। ११५

पञ्चाम्बा तत्परं देवि नवनाथाश्च तत्परम् ।
मूलविद्या ततः पश्चात् श्रीप्रसादपरा ततः ।। ११६

रहस्ययोगिनी पश्चात् शाम्भवी तदनन्तरम् ।
श्रीहृल्लेखा ततः पश्चात् ततः श्रीसमया मता ।। ११७

श्रीपरा बोधिनी देवी बकुलंचाक्षरी ततः ।
चैतन्या सौभाग्यविद्या कौलविद्या तु तत्परम् ।। ११८

तत्पश्चात्तु महादेवि गुरूत्तमविमर्शनी ।
श्रीनामाख्या ततः पश्चात् श्रीसंवेदा ततः परम् ।। ११९

अनुत्तमा शाङ्करी च श्रीमूर्तेस्ततः परम् ।
महात्रिपुरविद्या च हंसविद्या ततः परम् ।। १२०

एवं क्रमेण संपूज्य पादुकादि महेश्वरि ।
सहस्र पादुकां मूर्ध्नि यजेत्साधकपुङ्गवः ।। १२१

संविदो नित्यसेवां च कृत्वा सिद्धिं समश्नुते .
क्षीरे ना(ण) संविदा वापि यजेच्छ्रीपादुकां बुधः ।। १२२

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशे
सप्ताशीतितमोऽध्यायः ।।



## ।। अष्टाशीतितमोऽध्यायः ।।

पार्वतीः

शम्भो शिव जगन्नाथ सर्वजीवदयापर ।
संवित्सेवाप्रकारं मे सप्रकारं(शं)वद प्रभो ।। १

महादेवः

शृणु कल्याणि वक्ष्येऽहं संवित्कल्पं वरानने ।
पशुपाशसमुच्छेदकारणं कुलयोगिनाम् ।। २

सिद्धमूलीमनोर्देवि सिद्धानन्दस्तु भैरवः ।
ऋषिस्त्वनुष्टुप्छन्दस्तु सिद्धमूली तु देवता ।। ३

[1]बालाबीजत्रयं कुर्यात् भोगमोक्षे नियोगकः ।
सिद्धमूलीश्रिया देवि ! ज्ञान बोध प्रबोधिनी ।। ४

राजप्रजा वश्यकरी कालकण्ठी त्रिशूलिनी ।
एवं षट्पदयोगेन बालया च षडङ्गकम् ।। ५

स (सा) दाप्रकाशिनि सदाशिव धर्मपत्नि
संवित्स्वरूपिणि समाश्रितकल्पवल्लि ।
कोणत्रयेशि कुलतन्त्ररहस्यमुद्रे
स्वच्छन्दभैरवि परे त्रिपुरे प्रसीद ।। ६

---

1. बालात्र्यक्षरैर्बीजशक्तिकीलककल्पनम् ।

परमेश्वरि पञ्चकृत्य लीले
परसंविन्मम पार्वति प्रसीद ।
पतितं पशुपाशयन्त्रितं मां
शिशुमाश्वासय
शीतलैरपाङ्गैः ।। ७

शुक्लवर्णा कृतयुगे त्रेतायां शोणितप्रभा
द्वापरे पीतवर्णा स्यात् नीलवर्णा कलौ युगे ।। ८

एवं ध्यात्वा महादेवीं श्यामां सांवित्स्वरूपिणीम् ।
पश्चात्तु साधको देवीं(देवि)पद्मं हस्ते विनिक्षिपेत् ।। ९

तत्र श्रीचक्रमालिख्य तत्र प्रणान् [1]प्रतिष्ठि च ।
वह्निसूर्य सुधांशूनां कलास्तत्र विभावयेत् ।। १०

ब्रह्मादीनां पञ्चकलाः सम्भाव्य परमेश्वरि ।
अखण्डैकादिमन्त्रांश्च पूर्ववज्जप्य मन्त्रवित् ।। ११

तारं त्रितारमुद्धृत्य कुमारीं च ततः परम् ।
ओं हसक्षमल प्रोक्त्वा वरयूं हा (ह) सतत्परम् ।। १२

क्षमलेतिपदं प्रोक्त्वा वरया(यी) मी(मि)ति संवदेत् ।
अमृतेति पदं प्रोक्त्वा तत्पश्चादमृतोद्भवेत्[2] ।। १३

---

1. प्रतिष्ठाप्येत्यर्थे अयं प्रयोगः असाधुरपि प्राचीन तन्त्रशास्त्रग्रन्थेषु एवं विधप्रयोगाणां बहुत्र दर्शनात् ग्राह्य एव ।
2. अमृतोद्भवे इत्येव साधुः अन्त्यस्तकारः त्याज्यः ।

अमृतेश्वरि ततः प्रोक्त्वाऽमृतवर्षिणि तत्परम् ।
अमृतां(तं)प्रा(स्रा) वययुगं संप्रोक्त्वा तु ततः परम् ।। १४

कलञ्जनाम ये(धे)यं च हरयुग्मं ततः परम् ।
शुक्ल(शुक्र)पाशं (शापं) च संप्रोक्त्वा विमोचययुगं वदेत् ।।

श्रीसिद्धमूलिसंविच्च स्वरूपणमा(मथो)वदेत् ।
बोधयेति युगं देवि हुं फट् स्वाहा त्रिवारकम् ।। १६

एवं कृते भवे(व)त्याशु शुक्ल(क्र)शापविमोचनम् ।
ओं ह्रीं भङ्गी द्वयं प्रोक्त्वा महाभङ्गी वदेत्ततः ।। १७

मम वैरि जन भयं कुरुयुग्मं मसे(ने)ति च ।
मनः(सः) प्रसनं (प्रसादनं) च कुरुयुगं स्वाहा मनुस्तथा ।।

वाग्भयं(वं) बीजये ? प्रोक्त्वा वदनं चामृते वदेत् ।
परामृतोद्भवे स्वाहा मनं (मनुं) चैव त्रिवारकम् ।। १९

ह्रां पूर्वं विजये प्रोक्त्वा भैरवी ह्रीं समुद्धरेत् ।
सिद्धमूलिपदं पश्चात् कामरूपिणि (सं) वदेत् ।। २०

क्ष्म्यूं(क्ष् म्र्यूं)प्रिये भैरवि पूर्वं मममन्त्रपदं ततः ।
सिद्ध(सिद्धि) ज्ञानोदयं प्रोक्त्वा कुरुयुग्मं च हुं ततः ।। २१

हुं फट् स्वाहा त्रिवारं स्यात् तत्पश्चात्तारमुद्धरेत् ।
त्रितारी भङ्गि युग्मं च महाभङ्गी ममेति च ।। २२

इहैव सुख भगेति भोगं चेति ततः परम् ।
पूर्वं ज्ञानादि मोक्षं च कुरुयुग्मं ममेति च ।। २३

सुखं सदुल्लासं देहि युग्मं मम ततः परम् ।
आधिव्याधिमनः पीडा हरयुग्मं ततो वदेत् ।। २४

श्रीं ह्रीं संवित्पदं देवि मम हृत्पङ्कजोदरे ।
सुखासीना भव प्रोक्त्वा त्रिवारं त्रिर्जपेन्मनुम् ।। २५

सद्योजातादि मन्त्रं च(मन्त्रांश्च)जपेत्पञ्च महेश्वरि ।
त्रिसुपर्णं ततः पश्चात् शन्नोमित्रादि पञ्चकम् ।। २६

जपित्वा(?) च तदुल्लासस्तुतिं कुर्याद्विचक्षणः ।
संवित्तिशूलिनी देवी विजया वीरुदङ्कुरा ।। २७

चिदन्तादृष्टिरमला शारदा मधुपात्रिका ।
मनोन्मनी खेचरी च देवीमानसमर्पणा ।। २८

आग्नेयी भास्करी विश्वब्रह्मकल्पाऽमृतेस्वरी ।
वैष्णवी तुलसी तुङ्गतेजोवल्ली जयेश्वरी ।। २९

चिन्तामणिश्च सिद्धानां भैरवी भामिनी परा ।
विमर्शाद्वैतरूपा च नीललक्ष्मीर्महोदधिः(री) ।। ३०

निष्कला ज्ञानदा नव्या विभूतिर्विश्वसाक्षिणी ।
दुःखहेतिरनन्ता च सुखभूर्लहरी गृहा (?) ।। ३१

प्रकाशनविमर्शा सा सिद्धज्ञा सिद्धमूलिका ।
मृतसञ्जीविनी सूक्ष्मा उपाध्यायी ? कुलेश्वरी ।। ३२

भैरवी परमा ज्योतिः षट्पञ्चाशदमूनि च ।
जप्त्वा सङ्केतनामानि प्रार्थयन् सिद्धमूलिकाम् ।। ३३

सिद्धमूलीश्रिया देवि ज्ञानबोधप्रबोधिनी ।
राजप्रजावश्यकरी कालकण्ठी त्रिशूलिनी ।। ३४

अज्ञानान्धतमोदीप्तिर्ज्ञानाग्निर्जाल(ज्ञान)रूपिणी ।
महाविद्ये महामाये अमृते अमृतोद्भवे ।। ३५

आनन्दाज्या(हरि)हुतिप्रीते संविद्ज्ञानं प्रयच्छ मे ।
इति संप्रार्थ्य देवेशि सेवयेत् सिद्धमूलिकाम् ।। ३६

श्रीनाथादिकमारभ्य नम(व) नाथान्तमर्चयेत् ।
आर्द्रज्योतिर्मन्त्रेण सेवये तन्त्रमार्गतः ।। ३७

सुखलीलापदं प्रोक्त्वा विनोदा भव तत्परम् ।
ऐं पदद्वयं उच्चार्य क्लीं वाग्वादिनि सौः परम् ।। ३८

स्वाहा मन्त्रं समुद्धृत्य सेवयेत्सिद्धमूलिकाम् ।
हृत्पद्मासनसंरूढां संविद्रूपां महेश्वरीम् ।। ३९

चिद्रूपां कोटिसद्भासालहरीं स्फुरणालयाम् ।
सौरमार्गेण तां पश्यन् चरणं परिचिन्तयेत् ।। ४०

संवित्सेवाप्रकारं ते कथितं वरवर्णिनि ।
पूजान्ते भोजनं कृत्वा कुर्यादानन्दयागकम् ।। ४१

।। इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वरसंवादे
प्रत्यक्षसिद्धिप्रदे श्रीमहालक्ष्मीरत्न(कल्प)कोशाख्ये
अष्टाशीतितमोऽध्यायः ।।



## ।। एकोन नवतितमोऽध्यायः ।।

तन्त्रेऽस्मिन् पञ्चाधिकशताध्यायाः वर्तन्ते । परन्तु एकोननवतितमाऽध्यायगत(प्रोक्त) विषयाणां दुरूहत्वात् दुर्गमत्वात्-गूढाभिप्रायवत्वात् यथाविधि प्रप्तपूर्णाभिषेक(दीक्ष) मात्रयोग्यत्वात् च नास्माकं प्रकाशनाधिकारः इति एतावता विरम्यते ।।

**शिवम् भूयात्**



